# B H A G A V A D G I T A

Dengan Teks Bahasa Sanskerta
Terdjemahan, Kata Pendahuluan dan Keterangan

oleh

NJOMAN S PENDIT

Disjahkan dan Diterbitkan

oleh

LEMBAGA PENJELENGGARA PENTERDJEMAH
DAN PENERBIT
KITAB SUTJI WEDA DAN DHAMMAPADA
DEPARTEMEN AGAMA R I

1967

श्रीगणेशाय नमः।

# बृहद्देवता।

## प्रथमोऽध्यायः।

मन्त्रदृग्भ्यो नमस्कृत्य समाम्नायानुपूर्वशः।
सूक्तर्गर्धर्चपादानामृचु(१) वक्ष्यामि दैवतम्॥ १॥
वेदितव्यं दैवतं हि(२) मन्त्रे मन्त्रे प्रयत्नतः।
दैवतज्ञो हि मन्त्राणां तदर्थमधिगच्छति(३)॥ २॥
तद्विदा(४) तदभिप्रायानृषीणां मन्त्रदृष्टिषु।
विज्ञापयति विज्ञान कर्माणि विविधानि च॥ ३॥
न हि कश्चिदविज्ञाय याथातथ्येन दैवतम्(५)।
लौकिकानां वैदिकाना(६) कर्मणां फलमश्नुते॥ ४॥
प्रथमो भजते त्वासा वर्गोऽग्निमिह दैवतम्।
द्वितीयो वायुमिन्द्र वा तृतीय सूर्यमेव च(७)॥ ५॥
अर्थमिच्छन्नृषिर्देव य यमाशायमस्त्विति।

(१) ऋग्भ्य इति ख॰ ग॰ ङ॰।
(२) वेदितव्यं हि तत् सर्वमिति क॰ घ॰।
(३) तदर्थमधिगच्छति इति ख॰।
(४) तद्वित्तानिति ख॰ घ॰।
(५) देवता इति क॰ घ॰।
(६) लौक्यानां वैदिकाना वा इति ख॰ ग॰ ङ॰।
(७) सूर्यमेव तु इति क॰ घ॰।

प्राधान्येन स्तुवञ्छक्त्या[१] मन्त्रस्तद्देव एव सः ॥ ६ ॥

स्तुतिस्तु नाम्ना रूपेण कर्मणा बान्धवेन च ।

स्वर्गायुर्धनपुत्राद्यैरर्थैराशीस्तु कथ्यते ॥ ७ ॥

स्तुत्याशिषौ तु याः सूक्ते दृश्येते[२]ऽल्पास्तु ता इह ।

ताभ्यश्चाल्पतरास्ताः स्युः स्वर्गो याभिस्तु याच्यते ॥ ८ ॥

स्तुवन्तं[३] वेद सर्वोऽयमर्थयन्तं च मामिति ।

सौतीत्यर्थं ब्रुवन्तञ्च सार्थं मामेष[४] पश्यति ॥ ९ ॥

स्तुवद्भिश्च ब्रुवद्भिश्च ऋषिभिस्तत्त्वदर्शिभिः[५] ।

भवत्युभय[६]मेवोक्तमुभयं ह्यर्थतः समम् ॥ १० ॥

प्रत्यृचं देवतानाम यस्मिन्मन्त्रे प्रदृश्यते[७] ।

तमेवाहुः सुसम्पन्नं मन्त्र लक्षणसम्पदा ॥ ११ ॥

तस्मात्तद्देवतानाम्ना[८] मन्त्रे मन्त्रे प्रयोगवित्[९] ।

सङ्गत्वमभिधानाच्च[१०] प्रयत्नेनोपलक्षयेत् ॥ १२ ॥

---

(१) स्तुवन् भक्त्येति ग॰ घ॰ ।

(२) स्तुत्याशिषस्तु याः सूक्ते दृश्यन्ते इति क॰ घ॰ ।

(३) स्तुवंति इति ख॰ ङ॰ ।

(४) सोऽर्थमामेव इति क॰ ।

(५) स्तुवद्भिर्वा ब्रुवद्भिर्वा ऋषिभिर्मन्त्रदर्शिभिरिति ख॰ । मन्त्रेष्वर्थानुदर्शिभिरिति क॰ ग॰ ।

(६) भवत्युभयमिति क॰ घ॰ ।

(७) मन्त्रेऽभिधीयते इति ख॰ ग॰ ङ॰ ।

(८) तस्मात्तु देवतानाम्ना इति घ॰, तस्मात्तु देवता नाम्ना इति ख॰ ग॰ ।

(९) प्रयत्नत इति घ॰ ।

(१०) सङ्गत्वमभिधानञ्च इति क॰ घ॰ ।

सम्पूर्णमृषिवाक्यं तु सूक्तमित्यभिधीयते ।
दृश्यन्ते देवता यस्मिन्नेकस्य(१) बहुषु द्वयोः ॥ १३ ॥
देवतार्षच्छन्दोभ्यो(२) वैविध्यं तस्य जायते(३) ।
ऋषिसूक्तं तु यावन्ति सूक्तान्येकस्य(४) वै स्तुतिः ॥ १४ ॥
देवतैका तु यावत्सु देवतायास्तदुच्यते(५) ।
यावदर्थसमाप्तिः स्यादर्थसूक्तं वदन्ति तत् ॥ १५ ॥
समानच्छन्दसो यास्तु(६) तच्छन्दःसूक्तमुच्यते ।
वैविध्यमेतत्सूक्तानामिह(७) विद्याद्यथातथम् ॥ १६ ॥
देवतानामधेयानि मन्त्रेषु त्रिविधानि तु ।
सूक्तभाञ्ज्यथ ऋग्भाञ्जि तथा नैपातिकानि तु ॥ १७ ॥
सूक्तभाञ्जि भजन्ते वै सूक्तान्यृग्भाञ्जि वै(८) ऋचः ।
मन्त्रेऽन्यदैवतेऽन्यानि(९) निगद्यन्ते प्रसङ्गतः(१०) ॥ १८ ॥

---

(१) भिन्नं तद्दृश्यते यास्मिन्नेतस्यामिति क० घ० । एकस्येत्यत्र एकस्मिन्निति घ० ।
(२) देवतार्षच्छन्दस इति ख० ।
(३) वैविध्यं प्रजायते इति ख० ग० ङ० ।
(४) ऋषिसूक्तानि तान्यत्र यावन्त्येकस्येति क० घ० ।
(५) अस्मिन् श्लोकार्द्धस्थले ख० ग० ङ० पुस्तकेषु स्तूयन्ते तानि सर्वाणि सूक्ते सूक्तं हि तस्य तत् इति पाठो वर्त्तते ।
(६) या स्युरिति ख० ग० ङ० ।
(७) वैविध्यमेव सूक्तानामिहेति ख० ग० ङ० ।
(८) वै इत्यत्र यैरिति क० ख० घ० ङ० ।
(९) यानि इति घ० ।
(१०) निगद्यन्तेऽत्र कानिचित् इति ख० ग० पुस्तकान्तरे च ।

सालोक्यात्साहचर्याद्वा तानि नैपातिकानि तु।
तस्मादङ्गमकारेऽपि[१] सूक्ते स्यात्सूक्तभागिनी ॥ १९ ॥
देवता तद्यथासूक्तमविशेषं[२] प्रतीयते।
भिन्ने सूक्ते[३] वदेदेव देवतामिह लिङ्गतः ॥ २० ॥
तत्र तत्र यथावच्च मन्त्रान् कर्मसु[४] योजयेत्।
देवतायाः परिज्ञानात्तद्धि कर्म समृध्यते ॥ २१ ॥
आद्यन्तयोस्तु सूक्तानां प्रसङ्गपरिकीर्त्तनात्।
स्तोत्रैर्देवतास्तास्ता उपेक्षेतेह[५] मन्त्रवित् ॥ २२ ॥
तत् खल्वाङः कतिभ्यस्तु कर्मभ्यो नाम जायते।
सत्वानां[६] वैदिकानां च[७] यदन्यदिह[८] किञ्चन ॥ २३ ॥
नवभ्य इति नैरुक्ताः पुराणाः[९] कवयश्च ये।
मधुकः श्वेतकेतुश्च[१०] गालवश्चैव मन्वते[११] ॥ २४ ॥
निवासात्कर्मणो रूपान्मङ्गलाद्वाच आशिषः।

---

(१) बहुप्रकारेऽपि इति क॰ ङ॰ घ॰।
(२) अविशेष्येति ख॰, अविशेष्यमिति ग॰ ङ॰ पुस्तकान्तरञ्च।
(३) भिन्नसूक्ते इति क॰ घ॰।
(४) कर्म प्रयोजयेदिति ख॰।
(५) देवतानाम्ना उपेक्षेतेह इति ख॰। देवतानाम्नामपेक्षेतेह इति क॰ घ॰।
(६) सत्वानामिति क॰।
(७) वा इति क॰ ग॰।
(८) यद्वान्यदिहेति ङ॰ घ॰।
(९) पौराणा इति क॰ घ॰।
(१०) मधुकाश्च तकेताश्चेति क॰ घ॰।
(११) मन्यते इति क॰ ख॰ घ॰ ङ॰।

यदृच्छयोपवसना[१]त्तथामुष्यायणाज्जपात्[२] ॥ २५ ॥
चतुर्थं इति तचाऽऽर्याश्चगार्ग्यरथीतराः[३] ।
आशिषोऽप्यर्थवैरूप्या[४] द्वाचः कर्मण एव च ॥ २६ ॥
सर्वाण्येतानि नामानि कर्मतस्त्वाह[५] शौनकः ।
आशीरूपस्य वाक्यस्य[६] सर्वं भवति कर्मतः ॥ २७ ॥
यदृच्छयोपवसना[७] त्तथामुष्यायणाच्च[८] यत् ।
तथा तदपि कर्मैव तच्छृणुष्वन्तु[९] हेतुतः[१०] ॥ २८ ॥
प्रजाः कर्मसमुत्था[११] हि कर्मतः सत्त्वसङ्गतिः[१२] ।
क्वचित् संज्ञायते[१३] सत्त्व निवासात्तत्प्रजायते[१४] ॥ २९ ॥
यादृच्छिकं तु नामाभिधीयते[१५] त्विह कुत्रचित्[१६] ।

---

(१) यदृच्छयोपवचनादिति क॰ ङ॰ घ॰ ।
(२) तथा मुष्यायणाच्चेति क॰ घ॰ ।
(३) रथन्तरा इति ख॰ ।
(४) आशिषोऽथ च वैरूप्यात् इति क॰ घ॰ । आशिषोऽर्थवैरूप्यादिति ख॰ ङ॰ ।
(५) कर्मतस्त्वाह इति क॰ ग॰ ।
(६) वाच्यस्य इति ख॰ ग॰ ङ॰ ।
(७) यदृच्छयोपवचनादिति ख॰ ।
(८) यदृच्छया निवासाच्च यद्वा मुष्यायणाच्चेति क॰ घ॰ ।
(९) तच्छृणु त्वं च इति ग॰ ।
(१०) हेतवः इति ख॰ ग॰ ङ॰ पुस्तकान्तरेषु ।
(११) प्रजाकर्मसमुत्था इति क॰ ख॰ ।
(१२) कर्मण्याः सत्त्व जायते इति क॰, सत्त्वगा गतिः इति ख॰ ।
(१३) सतो निवसते इति क॰ घ॰, क्वचित् स जायते इति ग॰ ।
(१४) तत्र जायते इति घ॰ ।
(१५) नाम नामाधीयते इति ख॰ । यादृच्छिकं नाम नाम धीयते क॰ घ॰ ।
(१६) यत्र कुत्रचिदिति ख॰, यत्त्विह क्वचिदिति घ॰ ।

औपम्यादिव[१] तद्विधाद्[२] भावस्यैवेह कस्यचित् ॥ २० ॥
नाकर्मकोऽस्ति भावो हि न[३] नामास्ति[४] निरर्थकम् ।
नान्यत्र भावान्नामानि तस्मात्सर्वाणि कर्मतः ॥ २१ ॥
मङ्गलात् क्रियते यत्तु नामोपवचनाच्च[५] यत् ।
भवत्येव तु सा ह्याशीः स्वस्त्यादेर्मङ्गलानि च[६] ॥ २२ ॥
अपि कुत्सितनामाय[७]मिह[८] जीवेत्कथञ्चिरम् ।
इति क्रियन्ते नामानि भूतानां विदितान्यपि[९] ॥ २३ ॥
मन्त्रा नानाप्रकाराः सुदृष्टा वै[१०] मन्त्रदर्शिभिः ।
स्तुत्या चैव विभूत्या च वाक्प्रभावेण चात्मनः[११] ॥ २४ ॥
स्तुतिः प्रशंसा निन्दा च संशयः परिदेवना[१२] ।
स्पृहाशीः कत्थना याञ्चा[१३] प्रश्नः प्रैषः प्रवह्लिका[१४] ॥ २५ ॥
नियोगश्चानुयोगश्च श्लाघा विलपितञ्च यत् ।

---

(१) औपम्यादपीति ख०, औपम्यादिह इति ग० घ० ङ० ।
(२) तद्वत्ते इति घ० ।
(३) ना इति घ० ।
(४) वन्नामाच निरर्थकमिति ख० ।
(५) यच्च नामोपवचनस्य इति क० ख० घ० ।
(६) ह्याशास्ते मङ्गलानि च इति क० घ० । मङ्गलादिहेति ख० ङ० ।
(७) यचिकित्सितनामायमिति ख० ।
(८) अपि इति घ० ।
(९) निन्दितान्यपि इति क० घ० ।
(१०) ये इति ग० ङ० पुस्तकान्तरञ्च ।
(११) प्रभावाद्देवतात्मनं इति ख० ग० अन्यपुस्तकञ्च ।
(१२) परिवेदना इति क० ङ० ।
(१३) कथनायाच्ञेति क० ।
(१४) प्रवल्हिका इति ख० ग० ।

आचिख्यासा[१]ऽथ संलापाः परिचाख्यान[२]मेव च ॥ २६ ॥
आहनस्या नमस्कारः प्रतिरोध[३]स्तथैव च ।
सङ्कल्पश्च प्रलापश्च प्रतिवाक्यश्च नाम यत्[४] ॥ ३७ ॥
प्रतिषेधोपदेशौ च प्रमादापह्नवौ च यत्[५] ।
उपप्रेषश्च यः प्रोक्तः सञ्ज्वरो नाम[६] विस्मयः ॥ ३८ ॥
आक्रोशोऽभिलवश्चैवा[७]क्षेपः शापस्तथैव च ।
उपसर्गा निपाताश्च[८] नाम चाख्यातमित्यपि[९] ॥ ३९ ॥
भूतं भव्यं भविष्यच्च पुमांस्त्वथ[१०]नपुंसकम् ।
एवंप्रकृतयो मन्त्राः सर्ववेदेष्विति स्थितिः[११] ॥ ४० ॥
तेषां निदर्शनार्थीया[१२] ऋचोऽर्धर्चाः पदानि च ।
ब्राह्मणे चाथ कल्पे च निगद्यन्तेऽत्र कानिचित्[१३] ॥ ४१ ॥

---

(१) आविख्यासेति ख० ।
(२) सङ्लापा परिचाख्यान इति घ० ।
(३) प्रतिराध इति घ० प्रतिषेध इति अन्यत्पुस्तकाच्च ।
(४) तथैव च इति ग० अन्यत्पुस्तकाच्च ।
(५) च ह इति ग० अन्यत्पुस्तकाच्च ।
(६) यस्य इति ख० ग० ङ० अन्यत्पुस्तकाच्च ।
(७) आक्रोशोऽभिष्टवश्चैव इति ग० अन्यत्पुस्तकाच्च, आक्रोशोऽभिस्तवश्चैव इति ख० ।
(८) उपसर्गा निपाताश्चेति क० घ०, उपसर्गा निपातश्चेति ख० ।
(९) चाख्यानमेव चेति क० ।
(१०) स्त्री च इति ग० अन्यत्पुस्तकाच्च ।
(११) सर्ववेदेषु सर्वश इति ख० ग० ङ० अन्यत्पुस्तकाच्च । सर्वदेवेष्विति स्थितिरिति घ० ।
(१२) वाक्यार्थदर्शनार्थीया इति ङ० अन्यत्पुस्तकाच्च ।
(१३) विधौ कल्पे च देवे च निगद्यन्तेऽत्र कांश्चिदिति क० घ० ।

शब्देनोच्चरितेनेह येन द्रव्यं प्रतीयते ।
तदाचरविधौ युक्तं नामेत्याहुर्मनीषिणः ॥ ४२ ॥
अष्टौ यत्र प्रयुज्यन्ते नानार्थेषु विभक्तय[1] ।
तन्नाम कवयः प्राहुर्भेदे वचनलिङ्गयोः ॥ ४३ ॥
क्रियासु बह्वीष्वभिसंश्रितो यः
पूर्वापरीभूत इहैक एव ।
क्रियाभिनिर्वृत्तिवशेन सिद्ध
आख्यातशब्देन तमर्थमाहुः ॥ ४४ ॥
क्रियाभिनिर्वृत्तिवशोपजातः
कृदन्तशब्दाभिहितो यदा स्यात् ।
सङ्ख्याविभक्त्यव्ययलिङ्गयुक्तो
भावस्तदा द्रव्यमिवोपलक्ष्य[2] ॥ ४५ ॥
यथा नानाविधैः शब्दैरपश्यन्नृषयः पुरा ।
विविधान्यपि[3] वाक्यानि तान्यनुक्रमतः शृणु ॥ ४६ ॥
रूपादिभिः स्तुतिः प्रोक्ताऽऽशीः[4] स्वर्गादिभिस्तथा ।
यानि वाक्यान्यतोऽन्यानि[5] तान्यपि स्युरनेकधा ॥ ४७ ॥

(१) विभक्तय इति ग० पुस्तकस्थ ।
(२) शब्देनेत्यादि भावस्तदा द्रव्यमिवोपलक्ष्य इत्यन्त सन्दर्भ क० घ० चिह्नितपुस्तकयोर्नोपलभ्यते ।
(३) विविधानीह इति ख० ग० घ० ।
(४) आशीरिति क० ख० ग० ।
(५) यानि इति पुस्तकस्थ ।

मन्त्रे(१) प्रशंसा(क) भोजस्य(२) चित्रइत्(ख) सौभरेः(३)(ग)स्तुतिः ।
आक्रोशार्थास्तु दृश्यन्ते (घ)माता चेत्यभिमेथति(४) ॥४८॥
ऋङ्मोघमन्नं(ङ) निन्दा च(५) शापो(च) यमेत्यृगेव तु ।
याञ्चा(६) (छ)यदिन्द्रचित्रेति चैषा भौदमिति त्वृचि ॥४९॥
आशीस्तु(ज) वात आवातु दण्डेति परिदेवना(७) ।
प्रश्नश्च प्रतिवाक्यश्च(झ) पृच्छामि त्वेत्यृचौ पृथक् ॥५०॥
संशयोऽधःस्विदासीच्च(ञ) कत्थना(८) स्या(ट)दहं मनुः ।
इमं नो(ठ) यज्ञमित्यस्यां(ड) नियोगः(९) पाद उच्यते(१०) ॥५१॥

---

(१) मन्त्रः इति क० घ० ।

(२) प्रसङ्गाद्भोजस्य इति क० घ० मन्त्रप्रशंसा भोजस्येति ग० ।

(३) सौभरस्तुतिरिति ख० ।

(४) मा नामेत्याभिमेथति इति ख०, माता मेत्यभिमेथति इति क०ङ० ।

(५) ऋग्मोघमन्नविदाच इति ख० ।

(६) यास्यां इति ख०, याञ्चा इति ग०, यच्चना इति घ० ङ० ।

(७) दण्डादिपरिवेदना इति घ०, दण्डेतिपरिवेदना इति ख० च० ।

(८) संशयोधः स्विदासीदित्थकाथना इति क० घ०, कच्छना इति ङ० ।

(९) यज्ञमित्याद्यानियोगः इति ख० ।

(१०) उत्तमे इति क० घ० ।

---

(क) ऋ० १०,१०७,१० । (ख) ऋ० ८,२१,१८ । (ग) ऋ० ८,१९, २ । (घ) ऋ० १,१६०, २१; १८५,१० । (ङ) ऋ० १०, ११७, ६ । (च) ऋ० ८, २७, २० । (छ) ऋ० ५,३९, १ । (ज) ऋ० १०,१८६, १ । (झ) ऋ० १, १६४, ३४ । (ञ) ऋ० १०, १२९, ५ । (ट) ऋ० ४, २६, १ । (ठ) ऋ० १, १, ४ । (ड) ऋ० १, २६, १ ।

(क)इह ब्रवीत्यनुयोगः संलाप(१)स्तृगुपोपमे(२)(ख) ।
प्रतिषेधोपदेशौ(३) तु अक्षैर्मेत्य(ग)चसंस्तुतौ(४) ॥५२॥
आख्यान(५)न्तु स्वये जाये(घ) विलापस्तु(६)न्नदस्य मा(ङ) ।
अवीरामिव मां(च) श्लाघा(७) सुदेव इति(छ) तु स्पृहा ॥५३॥
नमस्कारः(ज) भूरन.ग्रेपे,(८) नमस्ते अस्तु विद्यते ।
सङ्कल्पयन्निदं तुल्योऽहं स्यामिति यदुच्यते(९) ॥५४॥
सङ्कल्पस्तु(झ) यदिन्द्राहं प्रलापस्त्वेतगश्व नुः(ञ)(१०) ।
महानग्न्याहनस्या तु प्रतिरोधो भुगित्युत(११) ॥५५॥

---

(१) सल्लाप इति क० ग० घ० ।
(२) त्यगुपोपमे इति ख० ग० धन्यत्पुस्तकेषु ।
(३) प्रतिषेधापदेशौ इति घ० ङ० ।
(४) अक्षैरित्यक्षसंकृत, इति घ० ।
(५) आख्यानमिति पुस्तकान्तरम् ।
(६) स्यादिति ख० ग० पुस्तकान्तरेषु ।
(७) अवीरामात्मनः श्लाघा इति ख० ग० घ० ।
(८) नमस्कारो मत ऋषे इति क० घ० ग्रैष इति ख०, ग्रैषे इति ङ० ।
(९) यां कल्पयन्ति नो रयः परिमाहलामिह ते इति क० ।
(१०) य इति ख० ग० ङ० पुस्तकान्तरेषु ।
(११) महानग्न्याह नग्नाख्यातिरागो भुगित्यपि इति ख०, भुगित्यपि इति ग०, भुगित्यभि इति पुस्तकान्तरं ।

---

(क) ऋ० १, ३५, ६ । (ख) ऋ० ८, ८८, ४ । (ग) ऋ० १०, ३४, १३ । (घ) ऋ० १०, ९५, १ । (ङ) १, १०९, ४ । (च) ऋ० १०, ८६, ९ । (छ) ऋ० १०, ९४, १४ । (ज) ऋ० १, २४, १२, १३ । (झ) ऋ० ८, १४, १ । (ञ) ऋ० ६, १५, ५ ।

प्रमादस्त्वेष[१]हन्ताहं[क] नमश्च[ख] इत्यभिप्लवः[२]।
इन्द्राकुत्सेत्युपप्रैषो[ग][३] न विजानामि[घ] संज्वरः ॥ ५६ ॥
होतायक्षदिति प्रैषः[४] को अद्धेति तु विस्मयः।
जामस्त[५]यक्ष्वो नेति विततादिः[ङ] प्रवह्लिका[६] ॥ ५७ ॥
[च]न मृत्युरासीदित्येतामाचिख्यासां[७] प्रचक्षते[८]।
अभिशापो[९]प्रजाः सन्तु भद्र[१०]माशीस्तु[छ] गौतमे[११] ॥ ५८ ॥
यक्ष्यप्येवं प्रकार[१२]न्तु शक्यं द्रष्टुमिहार्षजम्[१३]।

---

(१) प्रमोदस्त्वेष इति घ०।

(२) प्रमादस्त्वेकाहन्ताहं नमस्व इत्यन्त्व इति ख०, नमस्व इत्यपन्त्व' इति ग०।

(३) इन्द्राकुत्सेत्यपप्रैषो इति ख०, इन्द्राभरेत्युपप्रैषो इति क० ख०।

(४) होतायक्षदितिप्रैषा इति ख०।

(५) जामये इति घ०, जामनु इति ग०, यामनु इति ख०।

(६) प्रवह्लिका इति ख० ग०।

(७) माचिख्यासमिति क०, माविख्यासामिति ख०,माचिख्यासमिति घ०।

(८) प्रचक्षसे इति क०, प्रचक्षमे इति ख०।

(९) व्याविशापोः इति ख०।

(१०) भद्रमिति ख०।

(११) इगौतमे इति ख०।

(१२) यक्षमेव प्रकारमिति ख०।

(१३) इतीदृशमिति ख० ग० पुस्तकान्तरच।

---

(क) ऋ० १०, ११९, ९। (ख) ऋ० ७, २८, १०। (ग) ऋ० ५, ३१, ९। (घ) ऋ० १, १६४, ३७। (ङ) ऋ० १, १५२, ३। (च) ऋ० १०, १२९, २। (छ) ऋ० १, ७९, १०।

वक्तुं प्रयोगतस्तेषामृक्सूक्तार्थे च संश्रितम्[१] ॥ ५८ ॥

एते तु मन्त्रवाक्यार्था देवतां सूक्तभागिनीम्[२]।

संश्रयन्ते[३] यथान्यायं स्तुतिस्त्वचानुमानिकी[४] ॥ ६० ॥

भवद्भूतं भविष्यच्च जङ्गमं स्थावरञ्च यत्[५]।

अस्यैके[६]सूर्यमेवैकं प्रभवं प्रलयं विदुः ॥ ६१ ॥

(क)असतश्च (ख)सतश्चैव (ग)योनिरेषा[७] (घ)प्रजापतिः।

यद(ङ)क्षरञ्चा(च)व्यय(छ)ञ्च यच्चैत(छ)द्ब्रह्म[८]शाश्वतम् ॥ ६२ ॥

कृत्वैव[१०] हि(ज) त्रिधा(झ)त्मानमेषु लोकेषु (ञ)तिष्ठति।

---

(१) ऋक्सूक्तार्थेषु भक्तिमिति इति क०, चैषा यक्सुक्तार्थेषु संश्रित-मिति ख०।

(२) देवतां सूक्तभागिनामिति क० घ०, देवता सूक्तभागिनी इति ख०।

(३) संभूयते इति ख०।

(४) त्वा व्यानुमानिकी इति ख०, तत्रानुमानिकी इति घ०।

(५) भवद्भूतस्य भव्यस्य जङ्गमस्थावरस्य च इति ख० ग० पुस्तकान्तरञ्च।

(६) एते इति क० घ०।

(७) एषामिति क०।

(८) यदक्षरञ्च वाच्यमिति ग०, वाक्यमिति ङ० पुस्तकान्तरञ्च।

(९) यथैतद्ब्रह्म इति ग० ङ० पुस्तकान्तरञ्च।

(१०) कृत्वैव इति ख० ग० पुस्तकान्तरञ्च।

---

(क) ऋ० ५, १२, ४। (ख) ऋ० १, ३६, ३। (ग) ऋ० १, १०४, १। (घ) ऋ० ४. ५३, २। (ङ) ऋ० १, १६४, ४२। (च) ऋ० ६, ३७, ३। (छ) ऋ० १, १०, ४। (ज) ऋ० १, ११७, २४। (झ) ऋ० १, १६१, ६। (ञ) ऋ० १, ५१, ११।

(क)देवान् यथायथं(ख) सर्वान् निवेश्य(ग) स्वेषु(घ) रश्मिषु ॥ ६२॥
एतद्भूतेषु(१) लोकेषु अग्निभूतं स्थितं त्रिधा ।
(ङ)ऋषयो (च)गीर्भि(छ)रर्चन्ति व्यञ्जितं(२) (ज)नामभि(झ)स्त्रिभिः॥ ६४॥
तिष्ठत्येव च(३) (ञ) भूतानां(ट) जठरे जठरे ज्वलन्।
त्रिस्थानं चैनमर्चन्ति होत्रायां(ठ) वृक्तबर्हिषः ॥ ६५ ॥
इहैव(ड) पवमानो(ढ)ऽग्नि(४)र्मध्यमोऽग्निस्तु(ण) पावकः(५) ।
असुष्मिन्नेष(६) विप्रैस्तु लोकेऽग्निः(त) शुचिरुच्यते ॥ ६६ ॥
इत्याग्निभूतस्त्वृषिभिर्लोके स्तुतिभिरीडितः(७) ।
(थ)जातवेदाः स्तुतो मध्ये स्तुतो(द) वैश्वानरो दिवि ॥ ६७ ॥

---

(१) एतमेवैषु इति क० घ० ।
(२) व्यञ्जनमिति ङ० घ० पुस्तकान्तरञ्च ।
(३) एष च इति ख०, एष हीति ग० पुस्तकान्तरञ्च ।
(४) पवमानाग्निरिति क० घ० ।
(५) वनस्पतिरिति ख० ग० ङ० पुस्तकान्तरञ्च ।
(६) अमुष्मिन्नेव इति ग० ङ० पुस्तकान्तरञ्च ।
(७) ईरितः इति क० ख० ङ० ।

---

(क) ऋ० १, १, २। (ख) ऋ० १, १६१, ८। (ग) ऋ० ८, ८४, ८। (घ) ऋ० १, १२४, ४। (ङ) ऋ० १, ४८, १४। (च) १, ९, ९। (छ) ऋ० १, १०, १। (ज) ऋ० १, १५५, ६। (झ) ऋ० ८, ५९, ५। (ञ) ऋ० ३, २७, ९। (ट) ऋ० १, १०४, ९। (ठ) ऋ० १, ३, ३। (ड) ऋ० ८, १०१, १४। (ढ) ऋ० १, १, २। (ण) ऋ० १, ६०, ४। (त) ऋ० १, ६६, १। (थ) ऋ० १, ७७, ५। (द) १, ५९, ६।

[क]रसान् रश्मिभि[ख]रादाय[ग] वायुनाऽयं गतः सह[१]।
[घ]वर्षत्येष च यल्लोके[ङ] तेने[च]न्द्र [छ]इति स स्तुतः[२] ॥ ६८ ॥
[ज]अग्नि[झ]रस्मि[ञ]न्नथेन्द्रस्तु मध्यमो[३][ट]वायुरेव च।
[ठ]सूर्यो [ड]दिवीति विज्ञेयास्तिस्र एवेह[४] देवताः ॥ ६९ ॥
एतासामेव माहात्म्यान्नामान्यत्वं विधीयते।
तत्तत्स्थानविभागेन तत्र तत्रोपलक्षयेत्[५] ॥ ७० ॥
[ढ]तासा[ण]मियं [त]विभूतिर्हि [थ]नामानि यदनेकशः।
[द]आहुस्तासान्तु मन्त्रेषु[ध] कवयोऽन्योऽन्ययोनिताम्[६] ॥७१॥
यथास्थानं[न] प्रदिष्टास्ता[७] नामान्यत्वेन देवताः।

---

(१) सह संस्तुतः इति क० घ०।
(२) तु स्तुतः इति क० घ०।
(३) मध्यतः इति ग०।
(४) एवहि इति क० घ०।
(५) तत्र तत्रेह दृश्यते इति ग० ङ० पुस्तकान्तरञ्च।
(६) अन्योऽन्ययोगितामिति ख०।
(७) स्तु इति क०।

---

(क) ऋ० १, १९, ८। (ख) ऋ० ४, २६, ६। (ग) ऋ० १, १४, १०।
(घ) ऋ० ५, ८४, ३। (ङ) ऋ० १, २१, ६। (च) ऋ० १, २, ५।
(छ) ऋ० १, १०९, ३। (ज) ऋ० १, १, २। (झ) ऋ० १, ९, ९।
(ञ) ऋ० १, ४, ३। (ट) ऋ० १, १३४, ३। (ठ) ऋ० १, २३, १७।
(ड) ऋ० १, ६, १। (ढ) ऋ० १, ३२, ८। (ण) ऋ० १, ४८, ७।
(त) ऋ० १, ३०, ५। (थ) ऋ० १, ७२, ३। (द) ऋ० १, ११८, ३।
(ध) ऋ० ५, ५७, ८। (न) ऋ० ३, ३०, १९।

तद्भक्तास्तत्प्रधानाश्च[क] केचिदेवं वदन्ति ताः[1] ॥ ७२ ॥
[ख]पृथक् [ग]पुरस्ताद्ये तूक्ता[2] लोकादिपतय[घ][3]स्त्रयः ।
[ङ]तेषा[च]मात्मैव तत्सर्वं यद्यद्भक्तिः प्रकीर्त्त्यते[4] ॥ ७३ ॥
तेजस्त्वे[छ] वायुधं[5] प्राहुर्वाहनञ्चैव तस्य तत्[6] ।
[ज]इमामैन्द्रीञ्च [झ]दिव्याञ्च [ञ]वाचमेवं पृथक् स्तुताम् ॥ ७४ ॥
बहुदेवतायाः [ट]स्तुतयो द्वन्द्वशः स्तुतयश्च[7] याः ।
प्राधान्यमेव सर्व्वासु[8] पत्नीनामेव[9][ठ] तास्वपि ॥ ७५ ॥

---

(१) नैवं केचिद्वदन्ति तु इति क० घ०, तु इत्यत्र ता. इति पुस्तकान्तरं।

(२) येत्यूक्ता इति ख०, पुरस्ताद्यौरुक्ता इति घ० ।

(३) लोकाधिपतयः इति क० घ ।

(४) यदन्यद्भक्तिः कीर्त्त्यते इति क० घ० ।

(५) तेजस्ते वायवः इति क० ङ०, वायवाः इति ग०। तेजस्वे वायवा इति ख०, ।

(६) यस्य यत् इति क० ख० ग० ङ० पुस्तकान्तरञ्च ।

(७) द्विवत्सं स्तुतयश्च इति ग० ङ० पुस्तकान्तरञ्च, द्विवत्सं ततयश्च इति ख० ।

(८) प्राधान्यमेषां भूतानां इति क० घ० ।

(९) इव इति ख० ग० ङ० ।

---

(क) ऋ० ५, ३७, २ । (ख) ऋ० १, १३१, २ । (ग) ऋ० १, १२३, १० । (घ) ऋ० १, ३४, २ । (ङ) ऋ० १, २, १ । (च) ऋ० १, ११५, १ । (छ) ऋ० २, १५, ४ । (ज) ऋ० १, ३१, १६ । (झ) ऋ० ९, ९७, १० । (ञ) ऋ० १, ४०, ६ । (ट) ऋ० ६, ३४, १ । (ठ) ऋ० २, २८, ९ ।

[क]स्थानं [ख]नामानि भक्तीश्च[१] देवतायाः स्तुतौ स्तुतौ ।
सम्पादयन्नुपेचेत[२]याङ्काश्चिदिह सम्पदम् ॥ ७६ ॥
अग्निभक्तिस्तु तान् सर्वान्[ग]ग्नावेव[३] समापयेत् ।
यदिन्द्रभक्ति तच्चैन्द्रे[४] [घ]सूर्ये[५] सूर्यानुगश्च[६] यत् ॥ ७७ ॥
निरूप्यते[६] हवि[च]र्यस्यै[७] सूक्तन्तु [छ]भजते च [ज]या ।
[झ]सैव [ञ]तत्र प्रधानं स्यान्न[८]निपातेन [ट]याः [ठ]स्तुताः ॥७८॥
[ड]इति[९]त्रयाणामेतेषां[१०] [ढ]मुक्तः सामासिको विधिः ।
समासेनैवसूक्तस्तु[११] विस्तरेण त्वनुक्रमः[१२] ॥ ७९ ॥

---

(१) भक्तिश्चेति क० घ० ।
(२) संवादो यस्त्वपेच्चेत इति क० ।
(३) या सर्व्वामग्नावेव इति क० ।
(४) यदिन्द्रभक्तितश्चैन्द्रे इति क० घ० ।
(५) सौर्य्ये इति ङ० पुस्तकान्तरञ्च ।
(६) निरुप्यत इति घ० ।
(७) यस्मै इति घ० ।
(८) तत्र तत्र प्रधानोऽसौ न इति क० घ० ।
(९) इह इति क० घ० ।
(१०) एवैषामिति ग० ।
(११) समापद्यन्तु तत्सर्व्वमिति क० घ० ।
(१२) ष्यनुक्रमादिति घ० ।

---

(क) ऋ० ५, ७६, ४ । (ख) ऋ० १, ७२, ३ । (ग) ऋ० १, १२४, १ । (घ) ऋ० १, २३, १७ । (ङ) ऋ० १, १, ६ । (च) ऋ० १, १२, १ । (छ) ऋ० १, ६४, २ । (ज) ऋ० १, १२३, ४ । (झ) ऋ० १, २२, २ । (ञ) ऋ० १, ४८, १० । (ट) ऋ० १, ६, ६ । (ठ) ऋ० १, १०, ६ । (ड) ऋ० १, २२, १७ । (ढ) ऋ० ४, ३०, ७ ।

अवगम्यं वेदितव्यो हि नाम्ना[१] [क]सर्वस्य विस्तरः ।
न हि [ख]नामान्यविज्ञाय [ग]मन्त्राः शक्या हि वेदितुम् ॥८०॥
मन्त्रान्यमूर्त्तान्यपि च [घ]देवता च[२] महर्षयः ।
तुष्टुवुर्ऋषयः शक्या[३][ङ] तासु तासु स्तुतिष्विह[च] ॥८१॥
यैस्त्वग्नि[४][छ]रिन्द्रः [ज]सोमश्च [झ]वायुः [ञ]सूर्यो [ट]बृहस्पतिः ।
[ठ]चन्द्रोऽथ[ड]विष्णुः[ढ]पर्जन्यः[ण]पूषा वा[५][त]ऽप्यभवो[६][थ]ऽश्विनौ॥८२
[द]रोदसी [ध]मरुतो [न]देवाः[७] [प]पृथिव्यापः [फ]प्रजापतिः ।

---

(१) नाम्नो इति क० ङ०, नाम्नः इति घ० ।
(२) देवतावदिति क० घ० ।
(३) तुष्टुवुश्च प्रशंसयेति क० घ० ।
(४) येरग्निरिति घ० ।
(५) वा इति ख० ङ० पुस्तकान्तरेषु ।
(६) पूषोषा भगवः इति क० घ० ।
(७) देवाः इति क० घ० ।

---

(क) ऋ० १०,१६०,६ । (ख) ऋ० १, ७२, ३ । (ग) ऋ० ६,१०,१४ ।
(घ) ऋ० १, २२, ५ । (ङ) ऋ० २, २८, ६ । (च) ऋ० १, १, २ ।
(छ) ऋ० १, १, २ । (ज) ऋ० १, २, ५ । (झ) ऋ० १, १८, ४ ।
(ञ) ऋ० १, ११४, ३ । (ट) ऋ० १, २४, १० । (ठ) ऋ० १, ११०, ५ ।
(ड) ऋ० १, २२, १६ । (ढ) ऋ० ४, ५७, ८ । (ण) ऋ० १, २३, १४ ।
(त) ऋ० १, ११०, १ । (थ) ऋ० ५, ७५, ७ । (द) ऋ० १, १६०, ५ ।
(ध) ऋ० १, १५, २ । (न) ऋ० १, २३, १९ । (प) ऋ० १, २२, १६ ।
(फ) ऋ० ४, ५३, २ ।

(क)देवौ च (ख)मित्रावरुणौ पृथक् सह च ता(ग)वुभौ ॥८२॥
(घ)विश्वे च देवाः (ङ)सविता (च)त्वष्टा वै रूपकृन्मतः(१) ।
(छ)अश्वो(ज)ऽन्न(झ)ऋत्विजो(ञ)वज्रो(२)(ट)ग्रावाणो रथसंयुतः(३) ॥७४॥
(ठ)स्तुताः पृथक् पृथक् (ड)स्वैः स्वैः सूक्तैर्ऋग्भिश्च(४) (ढ)नामभिः ।
स्तुतौ स्तुतौ प्रवक्ष्यामि (ण)तानि (त)तेषामनुक्रमात् ॥८५॥
व्यवस्ये(थ)न्मन्त्रमाग्नेयं लिङ्गै(द)रग्नेश्च(५) लक्षितम् ।
हविष्यद्भिः(६) प्रधानैश्च(७) नामाक्रान्तैश्च केवलैः ॥८६॥

---

(१) रूपकृन्मुखः इति घ० ।
(२) यज्ञः इति घ० ।
(३) रथसंयुगः इति घ० ।
(४) सूक्तैर्ऋक्षु च इति घ० ।
(५) तु इति घ० ।
(६) हविष्यद्भि इति ग० घ०, हविर्भिरिति पाठः समीचीनः ।
(७) निरूप्यैवमिति घ० ।

---

(क) ऋ० ६, ५९, ५। (ख) ऋ० १, ३५, १। (ग) ऋ० १, १७९, ६। (घ) ऋ० १, ८९, १०। (ङ) ऋ० १, २२, ८। (च) ऋ० १, ३२, २। (छ) ऋ० १, ३६, ८। (ज) ऋ० १, १४०, २। (झ) ऋ० १, ६०, ३। (ञ) ऋ० १, ५१, ७। (ट) ऋ० १, ८९, ४। (ठ) ऋ० ४, ३०, ७। (ड) ऋ० १, ६८, ४। (ढ) ऋ० १, १५५, ६। (ण) ऋ० १, ५३, ६। (त) ऋ० १, २, १। (थ) ऋ० १, ३१, १३। (द) ऋ० १, २४, २।

ऐन्द्रस्तु(क)(१) मन्त्रो(२) वायव्यैर्लिङ्गै(ख)रैन्द्रैश्च लक्ष्यते(३)।
नामधेयैश्च(४) (ग)वज्रस्य बलकृतया बलेन च ॥ ८७ ॥
सौर्यस्तु लिङ्गैः(घ) सूर्यस्य(५) गुणैः सर्वैस्तु(६) तैजसैः।
(ङ)नामभिश्चैव(७) चन्द्रस्य सूक्तश्च(८) (च)भजतेऽच यैः(९) ॥ ८८ ॥
एतासां(१०) देवतानान्तु नामधेयानुकीर्त्तनैः।
(छ)यस्य यस्येह यावन्ति न व्यवस्यन्त्य(ज)तो(११)(झ)ऽन्यथा ॥ ८९ ॥
(ञ)अयं प्रयोगस्त्वेतेषां(ट) ज्योतिषां(१२)(ठ) त्रिषु(ड) वर्त्तताम्।

(१) ऐन्द्रैस्तु इति ख॰ घ॰।
(२) मन्त्रै इति घ॰।
(३) लक्षितमिति घ॰।
(४) नामभिश्चैव इति क॰ घ॰।
(५) सौर्य्यैश्च इति घ॰।
(६) च इति ख॰ घ॰।
(७) नामधेयैश्चेति ख॰ ग॰ ङ॰।
(८) सूर्यन्तु इति क॰ घ॰।
(९) य॰ इति ङ॰ पुस्तकान्तरेषु, थखिलैरिति घ॰।
(१०) अन्यासामिति घ॰।
(११) न व्यवस्यत्यतः इति ग॰ घ॰।
(१२) ज्योतिःषु इति ख॰ घ॰।

(क) ऋ॰ १, १४७, ४। (ख) ऋ॰ ३, ५३, ८। (ग) ऋ॰ ५, ३२,७। (घ) ऋ॰ १, १४, ६। (ङ) ऋ॰ १, १५५, ६। (च) ऋ॰ १, १२३,४। (छ) ऋ॰ १, ५, ४। (ज) ऋ॰ १, ६, ९। (झ) ऋ॰ ४, ३२, ८। (ञ) ऋ॰ १, १६, ७। (ट) ऋ॰ १, ११३, १। (ठ) ऋ॰ १, १५, ४। (ड) ऋ॰ १, ८८, ३।

लोकेषु मन्त्रवि[क]द्विद्वान् प्रयोगेनावसीदति ॥ ९० ॥
[ख]नीयतेऽयं नृभिर्यस्मा[ग]न्नयत्य[घ]स्मा[ङ]दसौ च तं[१] ।
[च]तेने [छ]मौ च [ज]क्रतु· [झ]कर्म सनामानौ पृथक् पृथक्[२] ॥ ९१ ॥
य[ञ] दिद्यते च[ट] जातस्य[३][ठ] जातैर्यदाऽन्न[४]विद्यते ।
तेनेमौ तुल्यनामानावुभौ लोकौ समाप्नुतः[५] ॥ ९१ ॥
विसृजन्नयमेतेषां[६] [ड]भ्राजते व्योम्नि [ढ]मध्यम ।
निपातमात्रे कल्प्यन्ते[७] तथा[८]ग्रेयानि कानिचित् ॥ ९२ ॥

---

(१) सकृदिति घ० ।
(२) सनातनौ इति घ० ।
(३) यत्नस्येति ख०, जात सन् इति घ० ।
(४) अद्येति घ० ।
(५) समश्नुता इति घ० ।
(६) सृजन्तिरयमेकस्तु इति घ०, विसृज्य नयमेतेषामिति ख० ।
(७) कल्पन्ते इति घ०, कथ्यन्ते इति ग० ।
(८) तस्य इति घ० ।

---

(क) ऋ० १, २४, १३ । (ख) ऋ० ८, २७, ३ । (ग) ऋ० ४, २१, ४ । (घ) १, १७१, ४ । (ङ) ऋ० १, १०५, १६ । (च) ऋ० १, २१, ६ । (छ) ऋ० २, ४०, २ । (ज) ऋ० १, १७, ५ । (झ) ऋ० १, ३१, ८ । (ञ) ऋ० १, ४४, ६ । (ट) ऋ० १, ९६, ७ । (ठ) ऋ० ५, १५, २ । (ड) ऋ० १०, २०, ३ । (ढ) १, १६४, १ ।

[क]अर्चिभिः[ख] केश्ययं[१] त्वग्निर्विद्युद्भिरेव[२] मध्यमः ।
अमौ तु[ग] रश्मिभिः[३] केशी तेनैनामाह[४] केशिनः[घ] ॥ ९३ ॥
एतेषां तु पृथक्त्वेन त्रयाणां केशिनामिह ।
संलक्ष्यन्ते प्रक्रियासु त्रयः केशिन इत्यृचि[५] ॥ ९४ ॥
न चैवैषां[६] प्रसूतिर्वा विभूतिः स्थानजन्म वा[७] ।
निर्वक्तुं शक्यमेतैर्हि कृत्स्नं व्याप्तमिदं जगत् ॥ ९५ ॥
[ङ]वैश्वानरं[८] श्रितो ह्यग्निरग्निं[९] वैश्वानरः श्रितः ।
अनयो[च]र्जातवेदाश्च तथैव[छ] जातवेदसि[१०] ॥ ९६ ॥

---

(१) अर्चिभिः केश्वर्य इति ख०, अर्चिर्भिः केश्ययमिति ङ० ।
(२) त्वेव इति ग० घ० ।
(३) तु रश्मिभिरिति ख० ।
(४) तेन नानाह इति घ० ।
(५) प्रक्षिप्तानि स्रुतवस्त्र हवींषि च इति घ० ।
(६) नत्वेवैषां इति घ० ।
(७) विभूतिस्थानजन्म वा इति ख० ग० ।
(८) वैश्वानरे इति क० घ० ।
(९) अग्नौ इति क० घ० ।
(१०) तु तथैनौ जातवेदसी इति क० ख० ग० ङ० ।

---

(क) ऋ० ५, ७९, ८ । (ख) ऋ० १०, १०२, ६ । (ग) ऋ० १, १९, ८ । (घ) ऋ० १, १६४, ४४ । (ङ) ऋ० ७, ५, ५, । (च) ऋ० १, ७७, ५ । (छ) ऋ० ६, १६, ४२ ।

सालोक्याच्चैकजातत्वाद्[१] व्याप्तिमत्त्वात्तु तैजसः[२] ।
तस्य तस्येह[३] दैवतं दृश्यन्ते ते [४]पृथक्[५] स्तुताः ॥९७॥
यत्त्वाग्नेयमिति ब्रूमः[६] सूक्तभाक् तत्र[७] पार्थिवः ।
जातवेदस्यमित्युक्ते सूक्तेऽस्मिन् मध्यमः स्तुतः[८] ॥ ९८ ॥
वैश्वानरीयमिति तु यत्र ब्रूमो[९]ऽथ वा क्वचित् ।
सूर्यसूक्तस्य[१०] भाक्तत्र ज्ञेयो वैश्वानरस्तुतौ[११] ॥ ९९ ॥
सूर्यप्रस्तुतावग्नी तु दृष्टौ[१२] पार्थिवमध्यमौ।
एतेषामेव लोकानां त्रयाणामध्वरेऽध्वरे ॥ १०० ॥
[क]रोहात्प्रत्यवरोहेण चिकीर्षन्नाग्निमारुतम्[१३] ।

---

(१) एकजन्याच्चेति क० घ० ।
(२) व्याप्तिमत्त्वाच्च तेजसः इति क० घ० ।
(३) यस्य यस्येह इति क० घ०, तस्य तस्य ह इति ख० ङ० ।
(४) च इति ख० ग० ।
(५) स्तुतिषु इति घ० ।
(६) यच्चाग्नेयमिति ब्रूम इति ग०, यत्त्वाग्नेयमिति घ० ।
(७) सूक्तं भक्त्या तु इति क० घ० ।
(८) सूक्तं भक्त्या तु मध्यमः इति घ० ।
(९) इत्युक्ते यद्ब्रूयामो इति क० घ० ।
(१०) सूर्य्य सूक्तस्येति ग० ।
(११) सूर्यभक्तस्य सूर्यस्य ज्ञेयो वैश्वानरो दिवि इति क० घ० ।
(१२) दृष्टौ इति ख०, दृश्यौ इति क० घ० ।
(१३) चिकीर्षन्नग्निमारुतमिति ग० ।

---

(क) ऋ० १, ५६, २ ।

प्राप्तं[1] वैश्वानरीयेण सूक्तेन प्रतिपद्यते ॥ १०१ ॥
ततस्तु मध्यमस्थाना देवतास्त्वनुशंसति[2]।
इन्द्रश्च[3] मरुतश्चैव स्तोचियेऽग्नि[4]मिमं पुनः ॥ १०२ ॥
तथैत[5]दुक्तमेतेषां विभूतिस्थानसम्भवम्।
यथा[6] च देवदेवस्य तत्र तत्रेह दृश्यते ॥ १०३ ॥
यद्यत्र पृथिवीस्थानं पार्थिवं चाग्निमिश्रितम्[7]।
तत्सर्वमानुपूर्व्येण[8] कथ्यमानं निबोधत ॥ १०४ ॥
जातवेदाः[क] श्रितो ह्य[9]ग्नि[ख]मग्निं वैश्वानरः[ग] श्रितः[घ]।

---

(१) प्राप्तमिति ग०।
(२) मध्यमे स्थानादेवतास्त्वनुशंससि इति ख०, देवतास्त्वच शंसति इति घ०।
(३) इन्द्रश्चेति ग०।
(४) स्तोचियाग्निमिति घ०।
(५) यथैतदिति ख० ग० घ०।
(६) तथा इति ख० ग० ङ०।
(७) वाग्निमिश्रितमिति क० घ०, वाग्निदमिश्रितमिति ङ०।
(८) आनुपूर्व्येणेति ग० घ० ङ०।
(९) अपि इति घ०।

---

(क) ऋ० ३, ७७, ५। (ख) ऋ० १, १, १। (ग) ऋ० १, ५९, ६। (घ) ऋ० १, ७५, ३।

द्रविणोदा[क]स्तथेध्म[ख]श्च श्रितश्चाग्निं[1] तनूनपात्[ग] ॥ १०५॥ ॥
नराशंसः[घ] श्रितश्चैन[ङ] मेन[2]मेवाश्रित[2]स्त्विलः[च] ।
बर्हिर्द्वार[छ]श्च देव्यो[ज]ऽग्नि[4]मेन[5]मेव तु संश्रिताः ॥ १०६ ॥
नक्तोषा[झ] सा च देव्यौ[6] च होतारा[ञ]वेतदाश्रयौ[7] ।
देव्य[8]स्तिस्रः श्रिताश्चैनं त्वष्टा[ट] चैवैतदाश्रयः ॥ १०७ ॥
श्रितो वनस्पति[ठ]श्चैनं[9] स्वाहाकृतय[ड] एव च ।
अश्वश्च[ढ] शकुनिश्चैव मण्डूका[ण]श्चैतदाश्रयाः[10] ॥ १०८ ॥

---

(१) चाग्निरिति घ० ।

(२) एतमेनमिति ग०, एवमेतमिति घ० ।

(३) चाश्रिता इति ख० घ० पुस्तकान्तरच्च ।

(४) देवोऽग्निमिति ख० ।

(५) एतमिति घ० ।

(६) देव्यौ इति ख० ।

(७) एतदाश्रितौ इति घ०, होतारौ च तदाश्रयौ इति पुस्तकान्तरं ।

(८) देव्या इति ग० ।

(९) एवमिति ख० ।

(१०) तदाश्रया इति ख० ।

---

(क) ऋ० १, १५, ७-९ । (ख) ऋ० ८, ४५, २ । (ग) ऋ० १, १८८, २ । (घ) ऋ० १, १४२, ३ । (ङ) ऋ० १, ९, २ । (च) ऋ० १, १२८, १ । (छ) ऋ० १, १३, ६ । (ज) ऋ० १, १४०, ७ । (झ) ऋ० १, १३, ७ । (ञ) ऋ० १०, ६५, १० । (ट) ऋ० १, ३२, २ । (ठ) ऋ० १, ९०, ८ । (ड) ऋ० ९, ५, ११ । (ढ) ऋ० १, ३६, ८ । (ण) ऋ० ७, १०३, ७ ।

[क]ग्रावाण[१]श्चैन[२]मद्रा[३][ख]श्च नराशंसस्तथा रथः[ग] ।
[घ]दुन्दुभिरिषुधि[ङ]श्चैव[४] हस्तघ्नो[च][५] भीशवो[६] धनुः[छ] ॥ १०९ ॥
[ज]ज्या चैतदाश्रितेषुश्च[७] श्रिता अश्वाजनी[झ][८] च या ।
[ञ]वृषभो द्रुघण[९]श्चैव[ट][१०] मेतं पितुरुलूखलम्[११][ठ] ॥ ११० ॥
नद्यश्चैवेनमापश्च सर्वाश्चौषधयस्तथा[१२] ।
रात्र्यश्चाप्याप्य[ड]रण्यानिः[ढ][१३] श्रद्धे[ण]ला[त]पृथिवी[थ]तथा[१४] ॥ १११ ॥

---

(१) आवया इति ख०, ग्रावद्म इति ग० ।
(२) एवमिति ख०, एतमिति घ० ।
(३) मद्या इति ग० ।
(४) एवमिति ग०, एतमिति ङ०, पुस्तकान्तरञ्च ।
(५) हस्तघ्नी इति पुस्तकान्तरं ।
(६) ह्यभीषव इति पाठ सुसङ्गततया भाति ।
(७) चाश्रयेषुरिति घ० ।
(८) चाश्वाजनी इति ख०, चाश्वाजनी इति घ० ।
(९) वृषभो द्रुघण इति ग०, वृषाद्द्रुघण इति घ० ।
(१०) एवमिति ग० ङ० पुस्तकान्तरञ्च, एवमिति घ० ।
(११) वृषभेद्रुघ्यणश्चैलमेथैतं पितुमुलूखलमिति ख० ।
(१२) सद्धेति ख०, सर्व्वा ओषधयश्च हेति ग० ङ० पुस्तकान्तरञ्च ।
(१३) रात्रिरथाक्षेप्यरण्यानी इति ख०, रात्र्यथाप्याप्यरण्यानी इति ग० ङ०, आदर्शपुस्तकमात्रे यरण्यानीति दीर्घस्वरान्तपाठोऽस्ति ।
(१४) श्रद्धा द्यावा पृथिव्यथेति क० घ० ।

---

(क) ऋ० १, ८९, ४ । (ख) ऋ० ९, ४३, ५ । (ग) ऋ० १, ३०, १८ । (घ) ऋ० १, २८, ५ । (ङ) ऋ० ६, ७५, ५ । (च) ऋ० ६, ७५, १४ । (छ) ऋ० ६, ७५, २ । (ज) ऋ० ६, ७५, ३ । (झ) ऋ० ५, ६२, ७ । (ञ) ऋ० १, ३१, ५ । (ट) ऋ० १०, ९५ १८ । (ठ) ऋ० १, २८, ६ । (ड) ऋ० ५, ४६, ८ । (ढ) ऋ० १०, १४६, २ । (ण) ७, ३२, १४ । (त) ऋ० १, १३, ९ । (थ) ऋ० १, २२, १३ ।

भजते चैन[1] मेवोर्व्यौ[क][2] द्वन्द्वभूते च रोदसी[ख][3] ।
मुषलोलूखले[ग] चैनं[4] हविर्धाने च ये स्तुते ॥११२॥
जोष्ट्री[5]चोर्जाहुती[घ] चैनं[6] शुतुद्र्या[7][ङ] च विपाट्[च] सह ।
यौ च देवौ शुनासीरौ[छ][8] तौ चाग्नी चैतदाश्रयौ[9] ॥११३॥
लोके वै[10] यच्च वै प्रातः सवनं[ज] क्रियते मखे[झ] ।
वसन्त[ञ]शरदौ[ट] चर्तू सोमो[ठ]ऽनुष्टुवयो[ड] चिरत्[ढ][11] ॥११४॥

---

(१) चैवमिति ख०, भजेते चैतमिति क० घ०, भजेते चैनमिति ङ० ।
(२) एवार्व्यौ[ण] इति क० ग० घ० ।
(३) तु रोदसी इति ख० ।
(४) एवेति क० घ० ।
(५) जोष्ट्रा इति ख० ।
(६) चोर्जाहुतिश्चैनमिति ख०, एवेति क० घ० ।
(७) सुतुद्र्या इति ख० ।
(८) सुनासीरौ इति ख० ।
(९) चैवाथैतदाश्रयौ इति क० घ०, चाग्नि चैतदाश्रयेति ख० ।
(१०) लोकोऽयमिति क०ग० घ० ङ० ।
(११) च यस्त्रिवृत् इति क० घ० ।

---

(क) ऋ० १, १४, ९ । (ख) ऋ० १, १६७, ५ । (ग) ऋ० १, २८, ६ ।
(घ) ऋ० ८, ६९, ४ । (ङ) ऋ० ३, ३३, १ । (च) ऋ० ३, ३३, १ ।
(छ) ऋ० ४, ५७, ५ । (ज) ऋ० १, १६, ५ । (झ) ऋ० १, ६, ८ ।
(ञ) ऋ० १०, ९०, ६ । (ट) ऋ० १, ७२, ३ । (ठ) ऋ० १, ८, १० ।
(ड) ऋ० १, २८, ६ । (ढ) ऋ० १, १४०, २ । (ण) ऋ० ६, ७५, ४ ।

गायत्री[क] चैकविंशश्च यच्च साम[ख]रथन्तरम्[१][ग]।
माध्याः[घ] साम च वैराजमाप्य[ङ]श्च वसुभिः[च][२] सह ॥११५॥
इन्द्रेण च मरुद्भिश्च सोमेन वरुणेन च।
पर्जन्येनर्त्तुभिश्चैव विष्णुना चास्य संस्तवः ॥११६॥
अस्यैवाग्नेस्तु पूष्णा च[३] साधार्च्यं वरुणेन च।
देवता वाहनश्चैव[४] हविषां[५] वहनं तथा ॥११७॥
देवतामर्थतत्त्वज्ञो मन्त्रैः संस्तूयते[६]हविः[७]।
असन्ततस्या[८]पि सतो[९] हविरेकं[१०] निरूप्यते ॥११८॥
कर्म दृष्टे च[११] यत् किञ्चिद्[१२] विषये[१३] परिवर्त्तते।

(१) साथं रथन्तरमिति ख०।
(२) आप्यश्चवसुभिरिति ख०, आप्याश्च वसुभिरिति ग० घ० ङ०।
(३) पुष्णश्चेति ख०, पुष्णा चेति ङ० पुस्तकान्तरश्च॥
(४) आपि इति क० घ०।
(५) हविष इति क० घ०।
(६) संयोजयेदिति क० घ०।
(७) विदुरिति ख०।
(८) असंस्कृतस्येति क० घ०।
(९) वितत इति घ०।
(१०) एषा इति ख०, एवमिति ग०।
(११) तु इति क० घ०, कर्म्म दृष्टेष्विति ङ० पुस्तकान्तरश्च।
(१२) य कश्चिदिति क० घ०।
(१३) विकथे इति ख०, विषये इति ङ०।

(क) ऋ० १०, १४, १६। (ख) ऋ० १,६२,२। (ग) ऋ० १०,१८१,१।
(घ) ऋ० १, १६४,५०। (ङ) ऋ० १, १०५, ९। (च) ऋ० १, ५८, ३।

इत्युक्तोऽयं गणः सर्वः पृथिव्यग्न्याश्रयो महान् ॥११९॥
यश्चेन्द्रो[1] मध्यमस्थानो गणः सोऽयमतः परः ।
विमानानि च दिव्यानि गन्धर्व्वाप्सरसां[2] तथा ॥१२०॥
इन्द्राश्रयस्तु[3] पर्जन्यो रुद्रो वायुर्बृहस्पतिः ।
वरुणः कश्च मृत्युश्च देवश्च ब्रह्मणस्पतिः[क] ॥१२१॥
मन्यु[4]श्च विश्वकर्मा च मित्रः क्षेत्रपति[5]र्यमः ।
तार्क्ष्यो वास्तोष्पतिश्चैव सरस्वांश्चैवमत्र ह[6] ॥१२२॥
अपानपाद्दधिक्रा[ख]श्च[7] सुपर्णो[ग]ऽथ पुरूरवाः[घ] ।
असतो[ङ]ऽसुनीति[च]र्वेन[छ]श्च[8] तथेन्दुश्च स्त्रियो दितिः[ज][9] ॥१२३॥

---

(१) त्विन्द्रः इति क० घ० ।

(२) गन्धर्व्वाप्सरसः इति क० घ०, गणश्चाप्सरसामिति ग० ङ० पुस्तकान्तरञ्च ।

(३) इन्द्राश्च यस्तु इति क० घ० ।

(४) मनुरिति ख० ङ० ।

(५) मित्रश्चेत्रपतिरिति ख० ग० ।

(६) तत्र तु इति क० घ० ।

(७) अपान्नपाद्दधिक्रा चेति क० घ० ङ०, अपान्नपाद्दधिक्राश्चेति ग० ।

(८) वैनश्चेति घ० ।

(९) तस्यैतस्याश्रये दिति इति क० घ०, तथादुश्च स्त्रियो दितिरिति ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० २, २४, २ । (ख) ऋ० ४, ३८, ९ । (ग) ऋ० १,३५,७ । (घ) ऋ० १, ३१, ४ । (ङ) ऋ० ८, ९०, ५ । (च) ऋ० १०, १२,४ । (छ) ऋ० १, ८३, ५ । (ज) ऋ० ७, १५, १२ ।

त्वष्टा[क] च सविता चैव वातो[ख][१]वाचस्पतिस्तथा ।
धाता प्रजापतिश्चैव अथर्वाण[ग]श्च[२] ये स्मृताः ॥१२४॥
भृगव[घ]श्चैवमग्निश्च[३] तथेला[ङ] चैव याः स्मृताः ।
विधातेन्दुरहिर्बुध्न्यः [च]सोमोऽहिरथ चन्द्रमाः ॥१२५॥
विश्वानर[छ]श्च वै[४]देव ऋभूणां[ज] संस्तुतो[५] गणः ॥१२६॥
मरुतोऽङ्गिरसश्चैव पितरस्तुभिः सह ।
राका[झ][६]वाक्[ञ]सरमा[ट]श्रद्धा[ठ]श्च[७]भृगवो[ड]ऽघ्न्या सरस्वती॥१२७॥
यम्यु[८]र्वश्यौ[ढ]सिनीवाली[ण] पथ्या[त] स्वस्ति[थ]स्तपाः कुहूः ।

---

(१) वाचः इति क॰ घ॰ ।
(२) वाथर्व्वाणश्चेति ख॰ ।
(३) श्येनश्चैवैवमापश्चेति ख॰ घ॰ ।
(४) चैवेति ख॰ पुस्तकान्तरञ्च ।
(५) रुद्राणां चाश्रित' इति क॰ घ॰ ।
(६) एका इति क॰ ।
(७) वाक्सरमाद्यश्चेति ङ॰ ।
(८) यभ्युरिति ख॰ ।

---

(क) ऋ॰ १, ३२,२ । (ख) ऋ॰ १, २८, ६ । (ग) ऋ॰ ९, ११, २ ।
(घ) ऋ॰ १, ५८, ६ । (ङ) ऋ॰ १, १३, ९ । (च) ऋ॰ १, १८६, ५ ।
(छ) ऋ॰ १, १८६, १ । (ज) ऋ॰ ४, ३५, २ । (झ) ऋ॰ २, ३२, ८ ।
(ञ) ऋ॰ १, १६४, ४५ । (ट) ऋ॰ १, ६२, ३ । (ठ) ऋ॰ १,१०५,९ ।
(ड) ऋ॰ १, ५८, ६ । (ढ) ऋ॰ १, १०१, ४ । (ण) ऋ॰ २, ३२, ८ ।
(त) ऋ॰ ३, ५४, ५ । (थ) ऋ॰ ३, ८९, ६ ।

पृथिव्यनुमतिर्धेनुः सीते[क]ला[ख]ख्या तथैव[१] गौः ।
गौरी[ग] च रोदसी[घ] चैव इन्द्राण्या[२]श्चैव वै पतिः ॥१२८॥
छन्दस्त्रिष्टुप् च पङ्क्ति[ङ]श्च लोकानां मध्यमस्य यः ।
एतेष्वेवाश्रयो[३]विद्यात्सवनं[च] मध्यमञ्च यत् ॥१२९॥
ऋतू च ग्रीष्महेमन्तौ यच्च सामोच्यते[४] बृहत् ।
शक्करीषु[छ] च यद्गीतं नाम्ना तत्साम शाक्करम् ॥१३०॥

इति बृहद्देवतायां प्रथमोऽध्यायः ।



(१) शीलाद्येषा दितिश्चेति क॰ घ॰, सीतालाद्या तथैवेति ख॰ ग॰।
(२) चैवेन्द्रायण्याः इति ख॰ ।
(३) एकस्यैवाश्रयः इति क॰ घ॰, घाश्रये इति ख॰ पुस्तकान्तरञ्च।
(४) साम्नोच्यते इति ख॰ ।

(क) ऋ॰ ४, ५७, ७। (ख) ऋ॰ १, १२८, ७। (ग) ऋ॰ ८, १२, १। (घ) ऋ॰ १, १६०, ५। (ङ) ऋ॰ १०, ११०, ८। (च) ऋ॰ १, १६, ५। (छ) ऋ॰ ७, ३३, ४।

# अथ द्वितीयोऽध्यायः ।



आह चाप्येव तौ[१]सोमा[क]वाग्नयौ शाकटायनः[२] ।
यस्य[३] पञ्चदशे नाम्ना सङ्ख्याया[४] त्रिणवस्य[५] यः ॥१॥
संस्तुत[६]श्चैव पूष्णा च विष्णुना वरुणेन च ।
सोमवाय्वग्निकुत्सैश्च ब्रह्मणस्पतिनैव च ॥२॥
बृहस्पतिना च तथा[७] बृहत[ख]श्चैव वै पतिः[८] ।
कासुचित्[९] केचिदित्याहुर्निपाताः[ग] स्तुतिषु स्तुताः[१०] ॥३॥

---

(१) द्यौ इति ख० ग० ङ० ।
(२) भाकटायन इति क० घ० ।
(३) यस्येति ख० ।
(४) सङ्ख्यायामिति क० घ० ।
(५) त्रिणव इति दन्त्यनकारयुक्तपाठो विशुद्ध ।
(६) संस्तृत इति क० घ० ।
(७) स बृहस्पतिना चैव इति ख०, बृहतस्पतिना चैवेति ग० ङ० ।
(८) नाम्ना यस्यापि पर्व्वत (घ) इति ख० ग० ङ० पुस्तकान्तरश्च ।
(९) कश्चित्स इति क० घ० ।
(१०) निपातः स्तुतिषु स्तुत इति क० घ० ।

---

(क) ऋ० १, ८, १० । (ख) ऋ० १, १३०, ९ । (ग) ऋ० ४,५५,३ ।
(घ) ऋ० १, ३७, ९ ।

मित्र[क]स्तु[१] स्तूयते[२] देवो वरुणेन सहा:[३][ख]सहत् ।
रुद्रेण सोमः पूष्णा[४] च पुनः पूषा च वायुना ॥४॥
वातेनैव तु[५] पर्जन्यो लक्ष्यते वै क्वचित्[६] क्वचित् ।
ऋच[ग]र्द्धर्चेषु[७] पादेषु सूक्तेष्वेषु तु[८] तत्क्रमः ॥५॥
रसादानं[९] तु कर्मास्य वृत्रस्य[१०][घ] च निवर्हणं ।
स्तुतेः प्रभुत्वं सर्वस्य बलस्य[ङ] निखिला कृतिः ॥६॥
इत्यैन्द्रो मध्यमस्थानो गणः सम्यगुदाहृतः ।
यः परस्तु[११]गणः सौर्य्या द्युस्थानस्तं निबोधत ॥७॥

---

(१) तु इति ख० ङ० पुस्तकान्तरञ्च ।
(२) श्रूयते इति ग० ङ० पुस्तकान्तरञ्च ।
(३) सर्व्वेषु आदर्शपुस्तकेषु, सहा इति निर्व्विसर्गपाठो वर्त्तते ।
(४) पूषा इति ख० ।
(५) चैव इति ख० ङ० । चेति ग० ।
(६) अन्यत्र वै इति ग० ङ० पुस्तकान्तरञ्च ।
(७) अर्द्धर्चेष्वृक्षु इति क० घ०, ऋग्वर्द्धेषु इति ङ०, ऋग्वार्द्धर्चेषु इति ग० ।
(८) सूक्तेष्वेव त्विति क० घ०, सूक्तेष्वेतेषु इति पुस्तकान्तरं ।
(९) रसदानमिति क० घ० ।
(१०) वृत्रस्येति क० घ० ।
(११) यश्च यस्तु इति क० ।

---

(क) ऋ० १, २३, ६ । (ख) ऋ० ८, २०, २० । (ग) ऋ० ५, ५६, ३ ।
(घ) ऋ० १, ३२, १० । (ङ) ऋ० १, ३०, १२ ।

तस्य मुख्यतमौ देवावश्विनौ[१]सूर्य्यमाश्रितौ ।
वृषाकपायि[२][क] सूर्य्या[ख]षाः[ग] सूर्य्यस्यैव तु पत्नयः[३] ॥८॥
अमुतोर्वाङ्[४]निवर्त्तन्ते प्रतिलोमास्तदाश्रयाः[५] ।
पुरोदया[६]त्तामुषसं सूर्य्यां मध्यन्दिने स्थिते ॥९॥
वृषाकपायिं[२] सूर्य्यास्तकाल आहुः[७] स्तुतिष्वृचि[८] ।
तस्या[९]श्रये[१०]चरण्यूय[घ][११] भगः[ङ] पूषा वृषाकपिः[च][१२] ॥१०॥

---

(१) त्वश्विनौ इति क० घ० ।
(२) सर्व्वेषु आदर्शपुस्तकेषु वृषाकपायी इति दीर्घस्वरान्तपाठो वर्त्तते ।
(३) पत्नय इति क०, पत्नतः इति ख० ।
(४) अमुतोर्वागिति ङ० पुस्तकान्तरञ्च । अमुतो वागितिपाठः शुद्धः ।
(५) पत्नोदये इति क० घ० ।
(६) पुरोदये इति क० घ० ।
(७) सूर्य्यस्य तामेवाहुरिति क० घ०, सूर्य्यस्य त्वामेवाहुरिति ख० ।
(८) तु निम्रुचि इति क०, निमुचि इति ख० ।
(९) अस्येति क० घ० ।
(१०) आश्रमे इति ग० ।
(११) तस्याएवेति ख० ।
(१२) बृहस्पतिरिति ख० ।

---

(क) ऋ० १०, ८६, १३ । (ख) ऋ० ५, ७२, ५ । (ग) ऋ० १, ४६, १ ।
(घ) ऋ० १०, १७, २ । (ङ) ऋ० १, २४, ४ । (च) ऋ० १०, ८६, १ ।

यमो वैश्वानरो[क] विष्णुर्वरुणश्चैकपादजः[१] ।
पृथिवी च समुद्राश्च देवाः सप्तर्षयश्च ये ॥११॥
आदित्याः केशिसाध्याश्च सविता[२] वसुभिर्मनुः ।
दध्यङ्[ख]यर्वा[ग] विश्वे[घ] च वाजिनो[ङ][३]देवपत्नयः ॥१२॥
असौ तृतीयं सवनं[४] लोकः साम च[५] रैवतं ।
वैरूपश्चैव वर्षाश्च[६] शिशिरोऽथ ऋतुस्तथा[७] ॥१३॥
त्रयस्त्रिंशश्च[८]यः स्तोमः[च][९] कृपा सप्तदशश्च यः ।
छन्दश्च जगतीनाम्ना[१०] तथाऽतिच्छन्दसश्च[११]याः[१२] ॥१४॥

---

(१) अथ पादजः इति क० घ० ।
(२) आदित्यपूगः साध्याश्च साद्धश्चेति क० घ० ।
(३) वाजिनौ इति ख० ।
(४) तृतीयसवनमिति क० घ० ।
(५) तृतीयः सर्व्वेन लोमसामा चेति ख० ।
(६) वैरूप्यश्चैव मर्याश्चेति ख० ।
(७) शिशिरश्चैव यादृतू इति क० घ० ।
(८) त्रयस्त्रियश्चेति ख० ।
(९) यत् स्तोमं इति क०घ० ।
(१०) चैवेति क० घ० ।
(११) अतिश्छन्दसाश्चेति ग०, अतिच्छन्दसाश्चेति क० ख० घ० ।
(१२) यदिति क० घ० ।

---

(क) ऋ० १, ५९, ६। (ख) ऋ० १, ८०, १६। (ग) ऋ० १, ८०, १६।
(घ) ऋ० १, ३, ७-९। (ङ) ऋ० १, ११, २। (च) ऋ० १, ८, १०।

पौरुषस्याक्षरस्यैतत्सर्वमेव तु[1] पौरुषः ।
एतस्यैव तु विज्ञेया देवाः सत्त्विका[2]स्त्रय[3] ॥१५॥
चन्द्रमाश्चैव वायुश्च पञ्चमं वत्सर[4] विदुः ।
केचित्तु निर्वपत्य[5]स्य सौर्य्यं वैश्वानरं हविः ॥१६॥
सौर्य्यवैश्वानरीयं हि तत् सूक्तमिव[6]दृश्यते ।
ऋगर्द्धर्चोऽप्य[7]वा पादो दृष्टो वा यदि वा द्वृचः ॥१७॥
अनेन तु प्रवादेन[8] दृष्टा मूर्द्धन्वतास्तुतिः ।
सूर्य्यवैश्वानराग्नीना[9] मैकात्म्यमिह दृश्यते ॥१८॥
हरणं तु रसस्यैतत्कर्मणाऽमुत्र[10]रश्मिभिः ।
यानीमानि च पश्यन्ति सर्वभूतानि तेजसा[11] ॥१९॥

---

(१) हेति ख० ।
(२) सत्तामिका इति क० घ० ।
(३) तये इति ख० ।
(४) पञ्च संवत्सरमिति क० घ०, पञ्चसंवत्सरमिति ख० ।
(५) निर्व्वपते चेति क० घ० ।
(६) न सूक्तमिहेति क० घ० ।
(७) ऋगर्द्धर्चेति क० घ०, ऋगवर्द्धर्चापीति ख० ।
(८) प्रयोगेणेति क० घ०, प्रपादेनेति ख० ।
(९) सौर्य्यवैश्वानराग्नीनामिति क० ख० घ० पुस्तकान्तरञ्च ।
(१०) रश्मिभिश्चास्य कर्म्माऽमुत्र चेति ग० ङ० पुस्तकान्तरञ्च ।
(११) येन नातिविजानन्ति सूर्य्यभूतानि चक्षुषेति ख० ग० ङ० पुस्तकान्तरञ्च ।

विभागमिममेतेषां विभूतिस्थानसम्भवं ।
मन्त्यभिज्ञाय[१] मन्त्रेषु तन्तु[२] कर्मसु योजयेत् ॥२०॥
अध्यापयन्नधीयानो मन्त्र[३] स्चैवानुकीर्तयन् ।
स्थानं मालोक्यं मायुज्यमेतेषामधिगच्छति[४] ॥२१॥
अग्नेस्तु यानि सूक्तानि[५] पञ्च नामानि कारवः[क] ।
षड्विंशतिस्तथेन्द्रस्य माङ्कः सूर्यस्य सप्त च ॥२२॥
तेषां पृथङ्निर्वचनमेकैकस्येह कर्मजं ।
उच्यमानं यथान्यायं शृणुध्वमखिलं मया ॥२३॥
जातो यद्‌पे भूतानामग्रणीरध्वरे च यत् ।
नाम्ना सन्नयते वाङ्गं[६] स्तुतोऽग्निरिति[७] सूरिभिः[ख] ॥२४॥
द्रविणं[ग] धनं बलं वापि प्रायच्छद्येन[८] कर्मणा ।

---

(१) विज्ञानन्निति क० घ० ।
(२) तान्वेति क० घ० ।
(३) सत्तु इति क० घ० ।
(४) एव गच्छतीति ख० ग० ङ० पुस्तकान्तरञ्च ।
(५) सूक्तेषु इति क० घ० ।
(६) सन्तिष्ठते चाग्रे इति क० घ० ।
(७) इह्रेति क० घ० ।
(८) चैव प्रयच्छेद्येनेति क० घ० ।

---

(क) ऋ० १, ११, ६ । (ख) ऋ० १,५१,१५ । (ग) ऋ० १,६४,१४ ।

तत्कर्म दृष्ट्वा[1]कुत्स[क]स्तु प्राहैनं द्रविणोदसं[ख] ॥२५॥
अयं तनूनपाद्[ग]ग्निरसौ हि मननात्तनुः[2][घ]।
ततस्तु मध्यमो यज्ञे स्थानेऽयं[3] मध्यमात्तत.[4] ॥२६॥
अनन्तरं[5] प्रजामाहुर्नपा[ङ]दिति छपण्डवः।
नपादमुष्य[6]चैवायमग्निस्तेन तनूनपात् ॥२७॥
पृथक्त्वेन समत्वेन[7] यज्ञे यच्छास्यते[8] नृभिः।
स्तुवन्त्यासीषु तेनेमं नराशंस[च]न्तु.कारवः[9][छ] ॥२८॥
पुनाति[10] यदिदं विश्वमेवाग्निः[11] पार्थिवोऽय च[12]।

---

(१) कृत्वेति क० घ०।
(२) तपसा तनूरिति क० घ०।
(३) स्थानोऽयमिति ख०।
(४) यज्ञे यस्यैव मध्यमादिति क० घ०।
(५) अनन्तरामिति ङ० पुस्तकान्तरेषु।
(६) अमुष्येति ख०।
(७) समासैष्विति ख० ग० ङ० पुस्तकान्तरेषु।
(८) वास्यते इति क० ख०।
(९) सूरयः इति क० घ०।
(१०) जानाति इति ख०।
(११) विश्वमेधाग्निरिति ख०।
(१२) पार्थिवोऽप्यचेति ख०।

---

(क) ऋ० १, १०६, ६। (ख) ऋ० ६, ८८, ३।*(ग) १, १८८, २।
(घ) ऋ० १, १२०, ११। (ङ) ऋ० १, १४३, १। (च) ऋ० १, १३, ३।
(छ) ऋ० १, ११, ६।

वैखानसर्षिभि[१] स्तेन पवमान[क] इति स्तुतः[२] ॥२८॥
भूतानि वेदयञ्जातो जातवेदाऽथ[ख]कथ्यते[३]।
यद्वैष[४]जातविद्यो[५]ऽभूद्वित्वा[६]जातोऽधिवेत्ति[७] वा ॥३०॥
विद्यते सर्वभूतैर्हि[८] यद्वा जातः[९] पुनः पुनः।
तेनैष मध्यभागिन्द्रो[ग][१०] जातवेदा इति स्तुतः ॥३१॥
पुनाति यदिदं विश्वं ह्येषोऽग्निः[घ] पार्थिवोऽपि सन्।
वैखानसाश्रितैस्तस्मात्पवमान इति स्तुतः[११] ॥३२॥

---

(१) वैखानस ऋषिरिति ख०।
(२) पुनातीत्यादि पवमान इति स्तुतः इत्यन्तपाठः क० घ० पुस्तकयोर्नास्ति।
(३) जातैर्यद्राऽथ विद्यते इति क० घ०।
(४) यद्वैव इति क० घ०।
(५) जातं वेदः इति क० घ० पुस्तकान्तरञ्च।
(६) वित्तमिति ख० ग० ङ०।
(७) थाय वेत्तीति क० घ०।
(८) सर्व्वमेतद्वीति क० घ०।
(९) जातामिति क० घ०।
(१०) मध्यमागेन्द्र इति ख० ग०।
(११) एष श्लोकः ख० ग० ङ० पुस्तकेषु पुस्तकान्तरे च न विद्यते।

---

(क) ऋ० ८, १०१, १४। (ख) ऋ० १, ७७, ५। (ग) ऋ० १, २, ५। (घ) ऋ० १, १, २।

अणिष्ठ एष[१] यत्तु द्यौन्[२]व्याप्यैको व्योम्नि तिष्ठति ।
तेनैनमृषयोऽर्चन्त[३] कर्मणा वायु[क]मब्रुवन् ॥२३॥
क्षोणीमान्यावृणोत्येको[४]मूर्त्तेन तु रवेण यत् ।
तथैनं वरुणं[ख] प्राप्य स्तुतिष्वाहुः श्रपस्तवः[५] ॥२४॥
अरोदीद[६]न्तरिक्षे यद्विद्युद्वृष्टिं ददन्नृणां[७] ।
चतुर्भिर्ऋषिभिस्तेन रुद्र[ग] इत्यभिसंस्तुतः[८] ॥२५॥
चतुर्विधानां भूतानां प्राणो भूत्वा व्यवस्थितः ।
इष्टे चैवास्य सर्वस्य तेनेन्द्र इति स स्तुतः[९] ॥२६॥
इरां[घ] दृणाति[१०] यत्काले मरुद्भिः सहितोऽम्बरे ।

---

(१) अनिष्ठयैवेति क॰ घ॰ ।
(२) यस्मा इति क॰, यत्तु द्यौनिति ख॰ ङ॰, यत्तस्मा इति घ॰ ।
(३) अर्चन्ते इति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च ।
(४) क्षोणिमामावृणोल्लोकानिति क॰ घ॰ ।
(५) तु कारव इति क॰ घ॰ ।
(६) रोदस्यामिति क॰ घ॰ ।
(७) विद्युद्वृष्टिददान्नृणामिति क॰ घ॰ ।
(८) अभिधीयते इति क॰ घ॰ ।
(९) एष श्लोकः क॰ घ॰ पुस्तकयोर्नास्ति ।
(१०) इरा ददातीति क॰ घ॰ ।

---

(क) ऋ॰ ५, ४१, ६ । (ख) ऋ॰ १, २, ७ । (ग) ऋ॰ १, ४३, ३ । (घ) ऋ॰ ५, ८३, ४ ।

रवेण महता युक्तस्तेनेन्द्रमृषयोऽब्रुवन् ॥३७॥
यदिमां मार्जयत्ये(१)को रसेनाम्बरजेन गां ।
कालेऽग्निरौर्वश्चस्वर्षी(२)तेन पर्जन्य(क)माहतुः ॥३८॥
तर्पयत्येष यल्लोकान् जन्यो जनहितश्च यत् ।
परो(३)जेता जनयिता यदाग्नेयस्तुतो(४)जगौ(५) ॥३९॥
बृहन्तौ पाति यल्लोकावेष द्वौ मध्यमोत्तमौ ।
बृहता(६)कर्म्मणा तेन(७) बृहस्पति(ख) रितीडितः(८) ॥४०॥
ब्रह्म वाक् ब्रह्म सत्यञ्च ब्रह्म सर्व्वमिदं जगत् ।
पातारं ब्रह्मणस्तेन शौनहोत्रः स्तुवन् जगौ ॥४१॥
चर्षां(ग)(९) चितिभ्यो विदधद्दृतुष्वविशत् चितौ(१०) ।

(१) मार्जयतीति क० घ० ।
(२) चार्षी इति क० घ० ।
(३) पुरः इति ख० ।
(४) चाग्नेयस्तत इति ख० ग० ।
(५) एष श्लोकः क० घ० पुस्तकयोर्न दृश्यते ।
(६) बृहन्तीति ख० ।
(७) येनेति क० घ० ।
(८) बृहतश्चैव वै पतिरिति क० घ० ।
(९) चान्तमिति ग० ।
(१०) ब्रह्मवागित्यादि चविशत् चितौ इत्यन्तपाठः क० घ० पुस्तकयोर्न्नस्ति ।

(क) ऋ० ५, ८३, ६ । (ख) ऋ० १, ६२, ३ । (ग) ऋ० ३, ४९, ४ ।

न कुत[१]श्चैव[२] यद्दीनो हन्ता[क] तिष्ठति मध्यमः।
राहूगण ऋषिस्तेन प्राहैनं गौतमो[३] दितिं[ख] ॥४७॥
प्रजाभ्यस्त्वेष यच्छन्त एष वीरः शिवः सुखः[४]।
हिरण्यगर्भं[ग] स्तेनैनमृषिरर्चतु[५]वाचकम् ॥४८॥
इह प्रजाः प्रयच्छेति[६] सङ्गृहीता[७] प्रयाति[८] च।
ऋषिर्विवस्वतः पुत्रं तेनाहैनं पुन[९] र्यमं[घ] ॥४९॥
मित्रीकृत्य जना विश्वे यदिमं[१०] पर्य्युपासते।
मित्र[ङ] इत्याह तेनैनं विश्वामित्रः[च] स्तुवन् स्वयम् ॥५०॥
निदाघमासातिगमे यदृते नावति क्षितिम्[११]।

---

(१) नकुनः इति ख०, न क्रतः इति ङ०।

(२) यम इति क० घ०।

(३) गौतम इति क० घ०।

(४) प्रजाभ्यस्त्वेष यच्छम्मंकमिच्छन्मनसा सखम् इति ख० ग०।

(५) स्व त्विति ख०, इच्छनु इति ग० ङ० पुस्तकान्तरञ्च।

(६) प्रयच्छन् स इति ख० ग०, नियच्छन्निति क० घ०।

(७) सङ्गृहीत्वेति ग० ङ०, पुस्तकान्तरञ्च।

(८) सङ्गृहीताह यानि इति घ०।

(९) यमः इति क० घ०।

(१०) मैत्रं सर्व्वैर्जना विश्वे यदेते इति क० घ०, यदिमे इति ख०।

(११) यदि मेनावर्षीन्निलमिति क० घ०, यदतेना च निक्षति इति ख०।

---

(क) ऋ० १०, ९०, १। (ख) ऋ० ४, २, ११। (ग) ऋ० १०, १२१, १।
(घ) ऋ० १, ७३, १०। (ङ) ऋ० १, २१, ६। (च) ऋ० ३, ५९, ८।

विश्वस्य जनयन् कर्म्म विश्वकर्म्मा[क]थ तेन सः[१] ॥५१॥
सरांसि घृतवन्त्यस्य सन्ति लोकेषु यत्त्रिषु ।
सरस्वन्त[ख]मिति प्राह वाचं प्राहुः सरस्वतीम्[ग][२] ॥५२॥
प्राणभूतस्तु भूतेषु यद्वितत्येह[३] तिष्ठति ।
तेनैनं वेन[घ]माहर्षिर्वेनो[ङ]नामेह[४] भार्गवः ॥५३॥
सहजे मासि मास्येनमभिमत्य[५]ततो मजन्[६] ।
तेनैनं मन्यु[च]रित्याह मन्युरेव तु तापसः ॥५४॥
यदन्तकाले भूतानामेक[७] एव नयत्यसून् ।
तेनासुनीति[छ]रुक्तोऽयं स्तुवता श्रुतबन्धुना ॥५५॥
निदाघमासातिगमे जन्म मध्ये भवत्यपां[८] ।
नप्तार[ज]माह तेनैनमृषिर्गृत्समदः[झ]स्तुवन्[९] ॥५६॥

---

(१) त्विति क॰ घ॰ ।
(२) इतीमन्तु ब्रूतो दीर्घतमौर्वशौ इति क॰ घ॰ ।
(३) यद्देनत्येष्विति ग॰, यद्देनस्तेन्द्विति ङ॰ पुस्तकान्तरश्च ।
(४) व्याहार्चन् वेनोऽन्यमेहेति क॰ घ॰ ।
(५) अभिवत्येति ख॰, अभिपत्येति ग॰ ।
(६) मासि मासीमामभितप्य तपोऽयमः इति क॰ घ॰ ।
(७) एष इति क॰ घ॰ ।
(८) मध्येऽस्य यत्त्वपामिति क॰ घ॰ ।
(९) स्वपामिति क॰ घ॰ ।

---

(क) ऋ॰ ८, ९८, २ । (ख) ऋ॰ १, १६४, ५२ । (ग) ऋ॰ ६, ६१, २ ।
(घ) ऋ॰ ९, २१, ५ । (ङ) ऋ॰ १, ८३, ५ । (च) ऋ॰ २,२४,१४ ।
(छ) ऋ॰ १०, १२, ४ । (ज) ऋ॰ २, ३५, १४ । (झ) ऋ॰ २,१९,८ ।

अपा[१]मस्वरगर्भौघमादधत्[२]सोऽष्टमासिकम् ।
यत्क्रन्दत्य[३] सक्तन्मध्ये दधिक्रेति तदोच्यते[४] ॥ ५७ ॥
मासेन सम्भृतं गर्भं नवमेनाथ मासिकम्[५] ।
स्वयं क्रन्दन् दधात्युर्वीं धातेत्यृग्भिः स[६] गीयते ॥ ५८ ॥
स्तीर्णेऽन्तरिक्षे चिपति यद्वा तूर्णं चरत्यसौ[७] ।
अरिष्टनेमिस्तार्क्ष्य[क]र्षिस्तार्क्ष्यं तेनैन[८]मुक्तवान् ॥ ५९ ॥
रुवन्[ख] व्योमुदयं याति क्रन्दन् भा[९]दिग्जन्नपः ।
पुरूरवस[ग]माहैनं स्ववाक्येनोरु[घ]वाशिनौ[१०] ॥ ६० ॥

---

(१) रुध्यामिति क० घ० ।
(२) व्याहरदिति क० घ० ।
(३) यत्क्रन्दते इति क० घ० ।
(४) दधिक्रास्तेन कथ्यते इति ख० ग० ङ० पुस्तकान्तरच ।
(५) अष्टमासिकमिति क० घ० ।
(६) तु इति क० घ० ।
(७) तूर्णं चिपं यमसखा यद्विपालीष यन्वितीति क० घ०, तूर्णं चिप-त्यप्रसखो यद्वियति यन्वतीति ख०, करोत्यसौ इति ङ० पुस्तका-न्तरच ।
(८) एवमिति ख० ग० ङ० पुस्तकान्तरच ।
(९) क्रन्तमादिति ग० ।
(१०) स्ववाक्येवयाशिनौति क० घ० ।

---

(क) ऋ० १, ८९, ६ । (ख) ऋ० १, १७१, ९ । (ग) ऋ० १, ३१, ४ ।
(घ) ऋ० १२, १९, ० ।

यत्तु प्राच्या वयं नेति[१] घोषेण महता वृतः[२] ।
येमं चितिभ्यो विदधदयत्तुभ्यविश्नत् चितौ[३] ॥६१॥
तेन मृत्युमिमं मन्त्रं स्तौति मृत्युरिति स्वयं[४] ।
नाम्ना सङ्कुसुको[५] नाम यमपुत्रो जघन्यजः[६] ॥ ६२ ॥
संवर्तयंस्तमः सूर्य्या[७] दुपसञ्च प्रवर्तयन् ।
दिवाकरः प्रसौत्येकः[८] सविता तेन कर्म्मणा ॥ ६३ ॥
उदितो भासयल्लोका[९] न्निमांश्चैव स्वरश्मिभिः[१०] ।
स्वयं वसिष्ठस्तेनैनमृषिराह स्तुवन् भगम्[११][क] ॥ ६४ ॥

---

(१) नेतीति क० घ० ।
(२) मृधे इति क०, मृतः इति ख०, मृधमिति घ० ।
(३) एतच्छ्लोकार्द्धं ग० ङ० पुस्तकयोर्नास्ति । चायच्चितिभ्यो विरजत् यत्तु+स्वविश्न चितौ इति ख०, च्यविवच्चितौ इति क० घ० ।
(४) इतीश्वरमिति क० घ० ।
(५) सङ्कुसुमः इति क० ।
(६) जघन्यसः इति ख०, जघन्यकः इति ङ० ।
(७) स्वं वर्त्तयंस्तमो सूर्यो इति क० घ०, संवर्त्तयं तमः सूर्य्यादिति ख० ग० ङ० ।
(८) दिवा चरन् प्रसूत्यैकः इति क० घ० ।
(९) भाति यल्लोकानिति क० घ० ।
(१०) चैकस्य रश्मिभिरिति ख० ङ० पुस्तकान्तरस्य ।
(११) स्तुवन्भगमिति ग० ।

---

(क) ऋ० १, १४, ३।

पुष्यन् क्षितिं(१) पोषयति प्रणुदन् रश्मिभिस्तमः(२)।
तेनैनमस्तौत् पूषेति भरद्वाजस्तु पञ्चभिः ॥६५॥
यौषि भान्ति रजांस्यस्य यत्पदानि तु तेजसा(३)।
तेन मेधातिथिः प्राह विष्णु(क)मेनं(४) त्रिविक्रमम् ॥६६॥
कृत्वा सायं पृथग्याति(५) भूतेभ्यस्तमसोऽत्यये।
प्रकाशं किरणैः कुर्वंस्तेनैनं केशिनं(ख) विदुः ॥६७॥
समस्त्यैकैकशस्त्वेनं(६) यन्मन्यन्ते पृथङ्नराः।
विश्वे(ग) विश्वानर(७)(घ) स्तेन कर्मणा स्तुतिषु स्तुतः ॥६८॥
वृक्षे(ङ)व कपिशो(८)(च) भूत्वा यन्नाकमधिरोहति।
वृषाकपि(छ)रसौ तेन विश्वस्मादिन्द्र उत्तरः(ज)।
रश्मिभिः कम्पयन्नेति वृषा वर्षिष्ठ(झ) एव सः ॥६९॥

---

(१) उद्यन् जगदिति क० घ०।
(२) ततः इति ख०।
(३) तेजसः इति क० घ०।
(४) एतमिति क० ख० घ० ङ०।
(५) सौर्यं पृथक् तेऽपी इति क० घ०।
(६) सां प्रत्येकैकशस्त्वेवेति क० घ०।
(७) वैश्वानरः (ज) इति क० घ०।
(८) वृषेव कपिश इति क० घ०, वृषैककपिल इति ख० ग०।

---

(क) ऋ० ४,५४,१४। (ख) ऋ० १,१०,३। (ग) ऋ० २,३,७–९।
(घ) ऋ० १, १८६, १। (ङ) ऋ० १, ५९, ६। (च) ऋ० १, ७, ८।
(छ) ऋ० १०,२७,१६। (ज) ऋ० १०, ८६, १। (झ) ऋ० ४,१८,९।
(ञ) ऋ० २, ३७, ६।

सायाह्नकाले भूतानि स्वापयन्नस्तमेति यत् ।
वृषाकपि(क)रितो[1] वा स्यादिति मन्त्रेषु दृश्यते ॥७०॥
त्रिषु धन्वे(ख)ति[2] ह्यीन्द्रेण प्रत्युक्तो वारिषाकपे[3] ।
विष्णातेर्विशतेर्वा स्याद्वेवेष्टेर्व्याप्तिकर्म्मणः ।
विष्णुर्निरुच्यते वातः सर्वं सर्वान्तरश्च सः[4] ॥ ७१ ॥
पञ्च षड्विंशतिश्चैव यानि नामानि सप्त च ।
मध्यगग्नीन्द्रसूर्य्याणां तान्युक्तानि यथाक्रमम् ॥ ७२ ॥
नैपातिकानां नाम्नां तु प्रागुक्तैर्नामलक्षणैः ।
समस्तानां पृथक्त्वेन परिसङ्ख्या न विद्यते ॥ ७३ ॥
पार्थिवी(ग) मध्यमा(घ) दिव्या वागपि त्रिविधा तु या ।
तस्याः सूक्तानि नामानि यथास्थानं निबोधत ॥ ७४ ॥
शतत्रन्तु भजते सूक्तमेता[5]नद्यः स्तुता[6]भुवि ।

---

(१) ब्यतः इति पुस्तकान्तरं ।
(२) धान्वेतीति ग० त्रिबुधन्वेतीति ङ० ।
(३) वृषाकपे(ङ) इति ख० ।
(४) रश्मिभिः कम्पयन्नेतीत्यादि सर्व्वं सर्व्वान्तरश्च स इत्यन्तपाठः क० घ० पुस्तकयोर्नेष्यते ।
(५) श्चैषा इति क० घ०, एषा इति ख० ग० ।
(६) तदेति क० घ० ।

---

(क) ऋ० १०, २७, १६ । (ख) ऋ० १, ३८, ७ । (ग) ऋ० ८, २५, ६ । (घ) ऋ० ६, २५, १ । (ङ) ऋ० १०, ८६, १०—२२ ।

यं वै वेनं[१] भजन्त्यापो[२] यदा[३] चौषधयः सदा[४] ॥ ७५ ॥
अरण्यानी[क] च रात्री[ख] च श्रद्धा[ग] घोषाः[५][घ] सरस्वती ।
पृथिवी चैव नामैषा भूत्वा[६]या च भजन्ति च[६] ॥ ७६ ॥
अग्नायी[च]नामतोऽप्येषा[७] भूत्वाग्नेयेषु[८] केषुचित् ।
स्तुता निपात[छ]मात्रेण तच तत्रेह दृश्यते ॥ ७७ ॥
मध्ये सत्यदिति[ज]र्वाक्च[९] भूत्वा चैषा सरस्वती ।
समग्रं भजते सूक्तं त्रिभिरेव तु नामभिः ॥ ७८ ॥
एषैव दुर्गा भूत्वर्चं[झ] हत्वा[१०] स्यात् सूक्तभागिनी[११] ।

(१) यदा चैनमिति क० ख० घ०, यच्च वेनमिति ग० ।
(२) भवन्त्यापः इति ख० ।
(३) तदेति क० घ० ।
(४) तथेति क० घ० ।
(५) चैषेति क० ख० घ० ।
(६) भूत्वा या भजते त्वृचीति क०, व्याभजते त्वृचीति घ० ।
(७) श्रमायीत्ता च नामैषेति क० घ० ।
(८) भूत्वाग्नेयीष्विति क० घ० ।
(९) वाक्यमिति क० घ०, मध्यसत्यदितिर्वाक्चेति ख० ।
(१०) हत्वेति ङ० पुस्तकान्तरञ्च ।
(११) एषैव दुर्गा भूत्वर्चमिति श्लोकार्द्धं क० घ० पुस्तकयोर्न विद्यते ।

(क) ऋ० १०,१४६,४ । (ख) ऋ० १,११३,१ । (ग) ऋ० ७,३२,१४ ।
(घ) ऋ० १, ४६, १ । (ङ) ऋ० १०, १६२, ५ । (च) ऋ० ५, ४६, ८ ।
(छ) ऋ० ४, ५५, ३ । (ज) ऋ० १, ४३, २ । (झ) ऋ० ७, ६६, ११ ।

तन्नामानि च[१] मिन्द्राणी सरमा[क]रोमशो[ख]र्वशी[ग] ॥७९॥
भवत्पथ्या[घ]सिनीवाली[१][ङ] राका[च] चानुमतिः[३][छ] कुहूः ।
गौर्धेनुर्देवपत्न्योग्न्या[४] पथ्या स्वस्त्यय[५] रोदसी ।
नैपातिकानि च्वग्भाञ्जि[६] येषां नामानि कानिचित् ॥८०॥
यदा तु वाग्भवत्येषा[७] सूर्य्याऽमुं लोकमाश्रिता ।
तदा सूक्तमुषा[८][ज] भूत्वा सूर्य्या[झ] च भजतेऽखिलम् ॥८१॥
वृषाकपाय्यृचं[ञ] भूत्वा सरण्यू[ट]र्द्वं च ते भुवम्[९] ।

---

(१) सूक्तार्धानीयमिति क॰ घ॰ । सूक्तार्धार्धीयमितिपाठो विशुद्धः ।

(२) भवत्पथ्या(ठ)सिनीवालीति क॰ घ॰, भवत्स्वगन्या सिनीवालीति ख॰, भवत्पथ्या सिनीवालीति ग॰ ।

(३) राकोचानुमतिरिति क॰, राकोचानुमितिरिति घ॰, राका चानु-मितिरिति पुस्तकान्तरम् ।

(४) गोरीर्गौर्धेनुपत्न्योग्न्या इति क॰ घ॰, देवपत्न्योघ्रा इति ङ॰ पुस्तकान्तरञ्च ।

(५) स्वस्ति चेति ख॰, स्वस्तिश्चेति ग॰ ङ॰ पुस्तकान्तरञ्च ।

(६) नैपातिकान् पृथग्भाञ्जीति क॰ ।

(७) भजत्येषेति क॰ घ॰ ।

(८) सूक्तमुखेति ख॰ ग॰, तथा सूक्तमुषेति ङ॰ पुस्तकान्तरञ्च ।

(९) स्वेव तद्वृचमिति क॰ घ॰, ते भुवमिति पुस्तकान्तरम् ।

---

(क) ऋ॰ १, ६२, ३ । (ख) ऋ॰ १, १२६, ७ । (ग) ऋ॰ ५, ४१, १९ ।
(घ) ऋ॰ ३, ५४, ५ । (ङ) ऋ॰ ११, ३२, ८ । (च) ऋ॰ ११, ३२, ८ ।
(छ) ऋ॰ १०, ५९, ६ । (ज) ऋ॰ १, १८२, ६ । (झ) ४, ४४, १ ।
(ञ) ऋ॰ ७, ९६, ११ । (ट) ऋ॰ १०, १७, २ । (ठ) ऋ॰ ७, ८२, ४ ।

निपातमात्रं भजते द्यविच्च[1] पृथिवी सती ॥ ८२ ॥
सूर्य्यामेव[2] सतीमेतां गौरीं वाचं सरस्वतीम् ।
पश्यामो वैश्वदेवेषु निपातेनैव केवला:[3] ॥ ८३ ॥
घोषा[क] गोधा[ख] विश्ववारा[ग] पालोपनिषदस्रिपत्[4] ।
ब्रह्मजाया[घ] जुहू[ङ]र्नामागस्त्यस्य[5][च] स्वसाऽदिति:[छ] ॥ ८४ ॥
इन्द्राणी चेन्द्रमाता[6] च सरमा[ज] रोमशो[झ]र्व्वशी[ञ] ।
लोपामुद्रा[ट] च नद्यश्च यमी[ठ] नारी च शाश्वती[7][ड] ॥ ८५ ॥
श्रीर्लक्ष्मी: सार्पराज्ञी[ढ] वाक् श्रद्धा मेधा च दक्षिणा ।
रात्री सूर्य्या[ण] च सावित्री ब्रह्मवादिन्य ईरिता: ॥ ८६ ॥

---

(१) क्वचित्तु इति क० घ०, द्युवच्चेति ग० ।
(२) पृथिवी लिति क० घ० ।
(३) केवलामिति क० घ० ।
(४) पालोपनिषन्निमत् इति क० ख० घ० ङ० ।
(५) छन्दोऽनुरोधात् नाम ध्वगस्त्यस्येति पाठः समीचीनः ।
(६) चन्द्रमातेति ख० ।
(७) शश्वतीति क० घ०, तथैव चेति ख० ।
(८) सार्व्वराज्ञेति ख० ।

---

(क) ऋ० १०, ४०, ५ । (ख) ऋ० ८, ६९, ९ । (ग) ऋ० ३, ४, ३ ।
(घ) ऋ० १०, १०९, ३ । (ङ) ऋ० १, ५८, ४ । (च) १०, ६०, ६ ।
(छ) ऋ० १, ४३, २ । (ज) ऋ० १, ६२, ३ । (झ) ऋ० १, १२६, ७ ।
(ञ) ऋ० ५, ४२, १९ । (ट) ऋ० १, १७९, ४ । (ठ) ऋ० १०, १०, ९ ।
(ड) ८, १, ३४ । (ढ) ऋ० ४, ४४, १ ।

नवकः प्रथमस्तासां[1] वर्ग[2] स्तुष्टाव देवताः ।
ऋषिभिर्देवताभिश्च समूहे[3]मध्यमो गणः ॥ ८७ ॥
आत्मनो भावहत्तानि जगौ वर्गस्तथोत्तमः ।
उत्तमस्य तु वर्गस्य य ऋषिः सैव[4] देवता[5] ॥ ८८ ॥
आत्मानमस्तौद्वर्गस्तु देवतां यस्तथोत्तमः[6] ।
तस्मादात्मस्तवेषु स्याद्य ऋषि. सैव[7] देवता ॥ ८९ ॥
संवादेष्वाह वाक्यं यः स तु तस्मिन् भवेदृषिः[8] ।
यस्तेनोच्येत वाक्येन देवता तत्र[9]. सा भवेत् ॥ ९० ॥
उच्चावचेषु चार्थेषु निपाताः समुदाहृताः ।
कर्मोपग्रहणार्थं च[10] क्वचिच्चौपम्यकारणात् ॥ ९१ ॥
ऊनानां पूरणार्थावा[11] पादानामपरे क्वचित् ।

---

(१) तासामिति ख॰ ।
(२) वर्गाः इति क॰ घ॰ ।
(३) समूहे इति क॰, समुदे इति ख॰ ।
(४) ऋषिसैव चेति घ॰ ।
(५) आत्मनो भावहत्तानीत्यादि य ऋषि सैव देवता इत्यन्तपाठः क॰ घ॰ पुस्तकयोर्न विद्यते ।
(६) देवता चोत्तमस्तु य इति क॰ घ॰ ।
(७) आत्मस्तवेष्वेवं भवेद्दृष्टैवेति क॰ घ॰ ।
(८) भवत्यृषिरिति क॰ घ॰ ।
(९) तेष्विति क॰ घ॰ ।
(१०) कर्मोपग्रहणार्थेष्विति क॰ घ॰ ।
(११) पूरणार्थेष्विति क॰ घ॰ ।

मिताक्षरेषु ग्रन्थेषु पूरणार्थास्त्वनर्थकाः[१] ॥८२॥
कमीमिद्विति[२]विज्ञेया ये त्वनेकार्थकास्तु ते[३] ।
इव न चित्तु चत्वार[४] उपमार्था भवन्त्यमी[५] ॥८३॥
उपमार्थे[६] नकारस्तु क्वचिदेव निपात्यते ।
मिताक्षरेषु ग्रन्थेषु प्रतिषेधस्त्वनेकशः[७] ॥८४॥
इयन्त[८] इति सङ्ख्यानं निपातानां न विद्यते ।
प्रयोजनवशा ह्येते[९] निपात्यन्ते पदे पदे ॥८५॥
उपसर्गास्तु विज्ञेयाः क्रियायोगेषु[१०] विंशतिः ।
विशेषयन्ति ते त्वर्थां[११]न्नामाख्यातविभक्तिभिः[१२] ॥८६॥

---

(१) पूरणार्थं त्वनर्थकाः इति क॰ घ॰ ।

(२) चामिमिद्वतीति ख॰ ।

(३) त्वन्ये सार्थकाः स्मृतौ इति क॰ घ॰ ।

(४) इवोनचिन्नुचत्वार इति ग॰ । इवेनचिन्नुचत्वार इति ङ॰ ।

(५) भवन्ति ते इति ख॰ ग॰ ङ॰ ।

(६) उपमार्थे इति ग॰ ङ॰ ।

(७) ह्यनल्पशः इति ख॰ ग॰ ङ॰ ।

(८) इयन्तु इति ख॰ ।

(९) वशात् प्रकरणस्यैते इति ग॰ ङ॰ । वशाः प्रकरणस्यैते इति ख॰ ।

(१०) क्रियायोगेनेति ख॰ ग॰ ङ॰ ।

(११) ते त्वर्थमिति ग॰ ङ॰ । त्वर्थानिति घ॰ ।

(१२) विभक्तित' इति घ॰ । विभक्तिषु इति ख॰ ग॰ ङ॰ ।

(१)(अनु(क)अप(ख)दन्त(ग)रित्येतानाचार्यः शाकटायनः ।
उपसर्गाः क्रियायोगान्मेने तेन चयोऽधिकाः ॥९७॥
चीण्येव लोके लिङ्गानि पुमान् स्त्र्यथ नपुंसकम् ।
नामसूक्तप्रयोगेषु वाच्यं प्रकरणं तथा ॥९८॥
तेषान्तु नामभिर्लिङ्गैर्ग्रहणं सर्वनामभिः ।
क्षताक्षतस्य सदृशो गृहीतस्य पुनर्ग्रहः ॥९९॥
पादसूक्तर्चगर्धर्चनामान्यन्यानि यानि च ।
सर्वं नामानि चिह्नाङ्कन्यै चैवं यथा कथा ॥१००॥
प्रधानमर्थः शब्दो हि तद्गुणायत्त इष्यते ।
तस्मान्नानान्वयोपायः शब्दानर्थवशं नयेत् ॥१०१॥
अतिरिक्तं पदं त्याज्यं हीनं वाक्ये निवेशयेत् ।
विप्रकृष्टञ्च सन्दध्यादानुपूर्वीञ्च कल्पयेत् ॥१०२॥
लिङ्गं धातुं विभक्तिञ्च सन्नयेत् तच तत्र च ।
यद्यस्याच्छान्दसं वाक्यं कुर्यात् तत्तत्तु लौकिकम् ॥१०३॥
यावतामेव धातूनां लिङ्गं रूढिगतं भवेत् ।
अर्थश्चाप्यभिधेयञ्च तावद्भिर्गुणविग्रहः ॥१०४॥
धातूपसर्गावयवगुणशब्दाद्धंधातुजम् ।
बह्वेकधातुजं वापि यदनिर्वाच्यलक्षणम् ॥१०५॥
धातुजं धातुजाज्जातं समस्तार्थजमेव वा ।

---

(१) ९६ सङ्ख्यकश्लोकात् १२७ सङ्ख्यकश्लोकपर्यन्तं श्लोका, क० घ० चिह्नि-तयो पुस्तकयोर्नोपलभ्यन्ते । एते ख० ग० ङ० चिह्नितेषु पुस्तकेषूपलभ्यन्ते ।

---

(क) ऋ० १, ६, ७ । (ख) ऋ० १, ५५, ५ । (ग) ऋ० १, ५७, १ ।

वाक्यजं व्यतिकीर्णञ्च निर्वाच्यं पञ्चधा पदम् ॥१०६॥
द्विगुर्द्वन्द्वोऽव्ययीभावः कर्मधारय एव च।
पञ्चमस्तु बहुव्रीहिः षष्ठस्तत्पुरुषः स्मृतः ॥१०७॥
विग्रहान्निर्वचः कार्यं समासेष्वपि तद्धिते।
प्रविभज्यैव निर्ब्रूयाद्दण्डार्हो दण्ड्य इत्यपि ॥१०८॥
भार्या रूपवती चास्य रूपवद्भार्य्य इत्यपि।
इन्द्रस्य सोमयेत्येवमिन्द्रासोमौ निदर्शनम् ॥१०९॥
शब्दरूपं पदार्थश्च व्युत्पत्तिः प्रकृतिर्गुणः।
सर्व्वमेतदनेकार्थं दृशानवगमे गुणाः ॥११०॥
सामान्यवाचिनः शब्दा विशेषे स्थापिताः क्वचित्।
पलायने यथावृत्ति कौतुमर्था इतीर्य्यते ॥१११॥
विशेषवाचिनस्त्वन्ये सामान्ये स्थापिताः क्वचित्।
हिमेनाग्निमिति मन्त्रे हिमशब्दो निदर्शनम् ॥११२॥
पदमेकं समादाय द्विधा कृत्वा निरुक्तवान्।
पुरुषादः[क] पदं यास्को वृचे वृचे इति त्वृचि ॥११३॥
अनेकं सत्तथा चान्यदेकमेव निरुक्तवान्।
अरुणो मासकृन्मन्त्रे मासकृद्विग्रहेण तु ॥११४॥
पदव्यवायेऽपि पदे एकीकृत्य निरुक्तवान्।
गर्भे निधानमित्येते न जामय[ख] इति त्वृचि ॥११५॥
पदजातिरविज्ञाता त्वः पदार्थः सिनामनि।

---

(क) ऋ० १०, २७, २२। (ख) ऋ० १,२३,१६।

व्यस्तानामयमग्निश्च वायुः सूर्य्यश्च देवताः ॥१२६॥
वाग्देवत्योऽथ वायैन्द्रो यदि वा परमेष्ठिनः।
ओङ्कारो वैश्वदेवो वा ब्राह्मो देवः क एव वा) ॥१२७॥
भावप्रधानमाख्यातं षट्प्रकारा भवन्ति तु।
जन्मास्तित्वं परीणामो वृद्धिर्हानिर्विनाशनम् ॥१२८॥
एतेषामेव वर्णाः स्युरन्ये भावविकारजाः।
यथावचनमप्यूह्याः सामर्थ्यान्मन्त्रवित्तमैः ॥१२९॥
त्रीण्येव लोके लिङ्गानि पुमान् स्त्र्यथ नपुंसकम्।
नामसूक्तप्रदेशेषु योज्यं प्रकरणं त्वनु ॥१३०॥
तेषां तु नामभिर्लिङ्गैर्ग्रहणं सर्वनामभिः।
कुर्वन्नामानि वै वाक्छरन्यदेवतया यथा ॥१३१॥
यथेदमग्रे नैवासीदसद्वाप्यथवापि सन्।
जज्ञे यथेदं सर्वन्तु भाववृत्तं प्रचक्षते ॥१३२॥
वाग्देवत्योऽथ वायैन्द्रो यदि वा परमेष्ठिनः।
ओङ्कारो वैश्वदेवो वा ब्राह्मो देवः क एव वा ॥१३३॥
व्याहृतीनां समस्तानां दैवतं तु प्रजापतिः।
व्यस्तानामयमग्निश्च वायुः सूर्यश्च देवताः ॥१३४॥

इति शौनकाचार्यकृतौ वृहद्देवतायामुपोद्घातप्रकरणम्।

आग्नेयं प्रथमं सूक्तं मधुच्छन्दस आदितः[१]।
आग्नेयास्त्वन्योऽन्यदेवत्या[२] स्तृचाः सप्त त उत्तराः ॥१२५॥
वायव्यः प्रथमस्तेषामैन्द्रवायव उत्तरः।
मैत्रावरुण आश्विन्य[३] ऐन्द्रो यः पञ्चमस्तृचः[४] ॥१२६॥
[५]नान्यः षष्ठादिश्वलिङ्गो गायत्रोऽन्त्यस्तु यस्तृचः[६]।
बहुदैवतमन्यत्तु[७] वैश्वदेवेषु शस्यते ॥१२७॥
शुनःशेपो[८]न्वायीते[क] गौतमेऽथ च्छजिश्वनि[ख]।
अवत्सारे[ग] परु[घ]च्छेपे[९] अत्रौ[१०] दीर्घतमस्तृ[ङ]षौ[११] ॥१२८॥

---

(१) आर्षकमिति ग॰ ङ॰। घ॰ पुस्तकोद्धृतपाठश्च।
(२) सर्वेऽन्यदेवत्या इति ग॰ ङ॰। घ॰ उ॰।
(३) मैत्रावरुणोऽथाश्विन इति ख॰ ग॰ ङ॰। घ॰ उ॰।
(४) त्रिन्द्रोऽतो वैश्वदेवत इति ख॰। अथैन्द्रोऽतो वैश्वदेवक इति ग॰ङ॰।
(५) तन्नामा विश्वलिङ्गो वेति ग॰ ङ॰। घ॰ उ॰।
(६) गायत्रोऽन्त्यपरस्तृचः इति क॰ घ॰ च॰।
(७) बहुदेवतमन्त्यस्त्विति क॰ घ॰। बहुदैवत्यमन्यत्त्विति ग॰।
(८) शुनोऽथ वात्स्ये इति ग॰ ङ॰। घ॰ उ॰।
(९) परुच्छेपे इति ग॰। अवत्सारपरुच्छेपे इति ङ॰।
(१०) पुत्रे इति ख॰ ग॰ ङ॰। घ॰ उ॰।
(११) तत् एषौ इति ख॰।

---

(क) ऋ॰ १, ५१, ७। (ख) ऋ॰ ८, ४६, १०। (ग) ऋ॰ ५, ४४, १०। (घ) ऋ॰ १०, १००, ५। (ङ) ऋ॰ १, १५८, ६।

8

वसिष्ठे नाभानेदिष्ठे[क] गये[ख] मेधातिथौ मनौ[ग]।
कक्षीवति[घ][1] विहव्ये[ङ] च बह्वन्येषु चर्षिषु[2] ॥१३९॥
अगस्त्ये बृहदुक्थे[च] च विश्वामित्रे च[3] गाथिनि[छ]।
दृश्यन्ते विप्रवादास्तु[4] तासु तासु स्तुतिष्विह ॥१४०॥
बह्वीनां सन्निपातस्तु यस्मिन्मन्त्रे प्रदृश्यते।
आचार्यौ यास्कशाण्डिल्यौ वैश्वदेवं तमाहतुः[5] ॥१४१॥
पादं वा यदि वार्धर्चमृचं वा सूक्तमेव वा।
वैश्वदेवं वदेत्सर्वं यत्किञ्चिद्बहुदैवतं[6] ॥१४२॥
ऋषिभिर्देवताः सर्वा विश्वाभिः स्तुतिभिः स्तुताः।
संज्ञा तु विश्वमित्यासां[7] सर्वासां निपातिता[8] ॥१४३॥

---

(१) काक्षीवते इति ख०। कक्षीवते इति घ० उ०।
(२) चाचर्षिषु इति ख० ग० ङ०। घ० उ०।
(३) विश्वामित्रेऽथेति ख० ङ०। घ० उ०।
(४) विप्रपादाश्चेति क० घ० च०।
(५) तदाहतुरिति ग० ङ०। घ० उ०।
(६) बहुदैवतमिति क० च०।
(७) विश्वमित्येषेति ख० ग० ङ०। घ० उ०।
(८) निपातितौ इति ङ०। घ० उ०।

---

(क) ऋ० १०,६१,१८। (ख) ऋ० ६, ३, ८। (ग) ऋ० १, ३६, १६।
(घ) ऋ० १, ५१, १३। (ङ) ऋ० १, १०८, ६। (च) ऋ० ४, २०, १०।
(छ) ऋ० १, ८, १।

सारस्वतः सप्तमस्तु[१] एताः प्रउगदेवताः[२] ।
अविद्यमान ऊने वा प्रउगेऽप्यत्र आवपेत्[३] ॥१४४॥
सरस्वती तु द्विविधा ऋक्षु सन्दृश्यते स्तुता[४] ।
नदीवच्चैव वाग्वेव तथैवमुभयं स्तुत[५] ॥१४५॥
[६]सुरूपकृत्नु[क]मित्यैन्द्रं सप्त चान्योऽन्यतः परं ।
यज्ञादह[७] स्वधामिति मारुत्योऽनन्तरा ऋचः ॥१४६॥
एका वीळु[ख]चिदिन्द्राय[८] मरुद्भिः सह गीयते ।

---

(१) सारस्वतस्तु सप्तम इति ग० ङ०। घ० उ०।

(२) सारस्वतस्तु उत्तमश्चैता प्रउगदेवता इति ख०।

(३) अविद्यमान इत्यादिश्लोकार्द्धं ख० ग० ङ० चिह्नितपुस्तकेषु नोपलभ्यते।

(४) ऋक्षु सर्वासु सा स्तुतेति ग० ङ०। घ० उ०।

(५) नदीवद्देवतावच्च सूत्राचार्यस्तु शौनक इति ख०। अत्र सूत्राचार्यं इति ग० ङ०। घ० उ०।

(६) इत पूर्वं ख० ग० ङ०। घ०-उ० चिह्नित पुस्तकेषु नदीवन्निगमा घट्ते सप्तमो नेत्युवाच ह। अन्वेकाच दृषद्वत्या चित्रश्च सरस्वती। इय शुष्मेभिरित्येतं मेने यास्कास्तु सप्तमम्। षष्ठी सारस्वतस्यैता याज्या मैत्रायणीयके। प्राधान्याद्धविषः पश्यन् वाच एवैतरोऽब्रवीत्। इत्यधिकं पठ्यते।

(७) वलादह इति ख० यज्ञादह इति घ०।

(८) एकाविद्युचिमिन्द्रायमिति क०। एकाविशुचिदिन्द्रायेति ख०। एकावीलुचिदिन्द्रायेति ग०। एकावालुचिदिन्द्रायेति ङ०।

---

(क) ऋ० ३, ४, १। (ख) ऋ० १, ६, ५।

तस्या एकान्तरायास्तु अर्धर्चन्यो[१]द्विदेवतः ॥१४७॥
मरुद्गणप्रधानोऽयं त्वैन्द्रस्तु[२] विचिकित्सितः।
मन्दू[क][३]समानवर्चस्यौ[४] मन्दुनावासवर्चसा ॥१४८॥
मन्दू इति[ख] प्रगृह्णन्ति[५] येषामेव[६] द्विदेवतः।
एकदैवत्यमाश्रायो विश्वेयाध्ययनात् पदं[७] ॥१४९॥
रोदसी[ग] देवपत्नीनामपर्वाङ्गिरसे[घ] यथा[८]।
[९]मरुद्गणप्रधानेयमाचार्याणां स्तुतिर्मता ॥१५०॥
मरुद्गणप्रधानत्वादिन्द्रस्तु विचिकित्स्यते[१०]।

(१) अर्धर्चोऽन्योद्विदेवत इति घ० उ०। ङ०।
(२) त्वौत्यं चेति ख० ग०। घ० उ०। मरुद्गणप्रधानो त्वौत्यं चेन्द्रः इति ङ०।
(३) मन्दु इति ख०।
(४) समानवर्चस्यमिति ग०। समानवर्चसा इति घ०।
(५) मन्दू इति प्रगृह्णन्तीति क० घ० ङ० च०।
(६) एषमेवेति ख०। येषामेवेति ग० ङ०। घ० उ०।
(७) विद्यायात्ययनात्पदमिति ख०। विद्यानाध्ययनात्पदमिति क० घ० ङ०।
(८) रोदसी इत्यादि श्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते।
(९) मरुद्गणेति ङ०।
(१०) विचिकित्सित. इति ख० ग०। घ० उ०।

(क) ऋ० १, ६, ७। (ख) ऋ० १. ६, ७। (ग) ऋ० १, १६७, ५।
(घ) ऋ० १०, ६२, १।

मरुद्गणं महेन्द्रस्य(१) समांशं सकलं विदुः(२) ॥१५१॥
अग्निमित्यग्निदैवत्यं पादस्तत्र द्विदेवतः(३) ॥
निर्मथ्याहवनीयार्थावग्निनाग्निः(४) समिध्यते ॥१५२॥
द्वितीये द्वादशर्चे तु प्रत्यृचं देवताः स्तुताः ।
स्तूयन्ते ह्यग्निना सार्द्धं तासां नामानि मे शृणु(५) ॥१५३॥
प्रथमायां स्तुतश्चेध्मो(क)(६) द्वितीयायां तनूनपात्(ख) ।
नराशंसः(ग) तृतीयायां चतुर्थ्यां स्तूयते त्विळः(घ) ॥१५४॥
बर्हि(ङ)रेव तु पञ्चम्यां द्वारो(च) दैव्यस्ततोऽन्यया(७) ।
नक्तोषा सा तु सप्तम्यामष्टम्यां तु स्तुतौ(८) सह ॥१५५॥

---

(१) मरुद्गणमहेन्द्रस्येति घ० । मरुद्गणेनैन्द्रस्येति क० ख० घ० च० ।
(२) समासं शाकल्यं विदुरिति क० घ० च० ।
(३) पादस्तस्य द्विदैवतः इति ग० ङ० । घ० ञ० ।
(४) निर्मथ्याहवनीयार्थां अग्निनाग्निरिति क० घ० । निर्मथ्याहवनीयार्थेऽग्निनाग्निरिति च० ।
(५) स्तूयते देवताऽथासां नामानि शृणुते च मः इति क० घ० च० ।
(६) समिद्धस्त्विति क० घ० च० ।
(७) अन्यथेति ख०, अन्यया इति च० ।
(८) संस्तुतौ इति ग०, स स्तुतौ इति ङ० पुस्तकान्तरस्य ।

---

(क) ऋ० १६, ४५, ८ । (ख) ऋ० १, १२, २ । (ग) ऋ० १, १३, ३ ।
(घ) ऋ० १, १८८, १ । (ङ) ऋ० ३, ५९, १० । (च) ऋ० ५, ५, ५ ।

दैव्या[क]विति[१] तु होतारौ नवम्यामृचि संस्तुताः ।
तिस्रो देव्यो दशम्यां तु ज्ञेयस्त्वष्टे[ख]व तु स्तुतः ॥१५६॥
एकादश्यां तु सूक्तस्य स्तुतिं[२] विद्याद्वनस्पतिम्[ग] ।
द्वादश्यां तु स्तुता देव्यो विद्यात्स्वाहाकृती[घ]रिह[३] ॥१५७॥
सूक्तेऽस्मिन् प्रत्यृचं यास्तु[४] देवताः परिकीर्त्तिताः ।
ता एव सर्वास्त्वाप्रीषु द्वितीयायां[५] विकल्पते[६]॥१५८॥
प्रैषैः सहैव चैतानि त्वेकादश प्रचक्षते[७] ।
यजुषः[८] प्रैषसूक्तं वा दशैतानीतराणि तु ॥१५९॥
सौत्रामणानि[९] तु त्रीणि आजायायास्वनोधिके ।

---

(१) देव्याविति ख॰ ङ॰ ।
(२) स्तुतमिति ङ॰ ।
(३) देवी विद्यात्स्वाहाकृतीरितीति ग॰ ।
(४) प्रत्यृचे यास्त्विति क॰ घ॰ च॰ ।
(५) द्वितीया त्विति ख॰ ।
(६) विकल्पते इति ख॰ ग॰ च॰ ।
(७) प्रैषैः सहाप्रीसूक्तानि तान्येकादश सन्ति चेति ख॰ ग॰ ङ॰ । सहाप्री इत्यत्र सहैवेति ख॰ ।
(८) यजूंषीति ख॰ ग॰ ङ॰ ।
(९) सौत्रामणीतीति क॰ घ॰ च॰ ।

---

(क) ऋ॰ १, २७, १२ । (ख) ऋ॰ १, १२, २ । (ग) ऋ॰ ६, ४८, १० ।
(घ) ऋ॰ १, १८८, ११ ।

पुरुषस्य च यन्मेधे यजुःष्वेव तु तच्च ऋ[1] ॥१६०॥
अत्रैव प्रैषसूक्तं स्यान्न यजुःष्वाद्रियेत तत्[2] ।
तेषां प्रैषकृतं[3] यच्च यच्च[4] दीर्घतमा जगौ ॥१६१॥
मेधातिथं[5] यदुक्तं च वैश्वेवोभयवन्ति तु ।
ऋषिर्गृत्समदो[क][6] यच्च वाध्र्यश्व[ख]स्तु[7] यदुच्यते ॥१६२॥
नराशंसवदत्रि[ग]स्तु[8] दद्दृशेऽथ[9] यदौर्वशः ।
तनूनपाद्गस्त्यस्तु[10] जमदग्नि[घ]स्तु[11] यज्जगौ ॥१६३॥
विश्वामित्र[ङ] ऋषिर्यच्च जगौ वै काश्यपोऽसितः[च] ।
मेधातिथेस्तृचां[12] यास्तु प्रोक्ता द्वादश देवताः ॥१६४॥

---

(१) तानि षड़िति ख॰ ग॰ ङ॰ ।
(२) यजुष्वादि येषु चेति क॰ घ॰ च॰ ।
(३) प्रैषगतं सूक्तमिति ग॰ ।
(४) यच्च तच्चेति ख॰, यत्तु तच्चेति ङ॰ पुस्तकान्तरेषु ।
(५) मेधातिथेरिति ख॰, मेधातिथाविति ग॰ ङ॰ पुस्तकान्तरेषु ।
(६) ऋषौ गृत्समदे इति ग॰ ङ॰ पुस्तकान्तरेषु ।
(७) वाध्र्यश्वे चेति ग॰ ङ॰ पुस्तकान्तरेषु ।
(८) अत्रेश्चेति ख॰ ग॰ ङ॰ पुस्तकान्तरेषु ।
(९) ददर्श चेति ख॰ ग॰ ङ॰ पुस्तकान्तरेषु ।
(१०) चेति ग॰ ङ॰ पुस्तकान्तरेषु ।
(११) वामदेवश्चेति ग॰, जामदग्न्यश्चेति ङ॰ पुस्तकान्तरेषु ।
(१२) ऋचः इति ख॰ ग॰ ङ॰ पुस्तकान्तरेषु ।

---

(क) ऋ॰ २, १८, ८ । (ख) ऋ॰ १०, ६८, ५ । (ग) ऋ॰ १, १२८;८ ।
(घ) ऋ॰ ३, ५२, १५ । (ङ) ऋ॰ ३, ५३, ८ । (च) ऋ॰ १, ४६, १० ।

दैव्या[क]विति[१] तु होतारौ नवम्यामृचि संस्तुता:।
तिस्रो देव्यो दशम्यां तु ज्ञेयस्त्वष्टैव[ख] तु स्तुत:॥१५६॥
एकादश्यां तु सूक्तस्य स्तुतिं[२] विद्याद्वनस्पतिम्[ग]।
द्वादश्यां तु स्तुता देव्यो विद्यात्स्वाहाकृती[घ]रिह[३]॥१५७॥
सूक्तेऽस्मिन् प्रत्यृचं चास्तु[४] देवता: परिकीर्त्तिता:।
ता एव सर्वास्वाप्रीषु द्वितीयायां[५] विकल्प्यते[६]॥१५८॥
प्रैषै: सहैव हैतानि लैकादश प्रचक्षते[७]।
यजुष:[८] प्रैषसूक्तं वा दश्यैतानीतराणि तु॥१५९॥
सौत्रामणानि[९] तु त्रीणि प्राजापत्याश्वमेधिके।

---

(१) दैव्याविति ख० ङ०।
(२) स्तुतमिति ङ०।
(३) देवी विद्यात्स्वाहाख्यातौरितीति ग०।
(४) प्रत्यृचे याश्चितिति क० घ० च०।
(५) द्वितीया त्विति ख०।
(६) विकल्प्यते इति ख० ग० घ०।
(७) प्रैषै सहाप्रीसूक्तानि तान्येकादश सन्ति चेति ख० ग० ङ०। सहाप्री इत्यत्र सहैवेति ख०।
(८) यजूंषीति ख० ग० ङ०।
(९) सौत्रामणीतीति क० घ० च०।

---

(क) ऋ० १, २७, १२। (ख) ऋ० १, १३, २। (ग) ऋ० ६, ४८, १०।
(घ) ऋ० १, १८८, ११।

पुरुषस्य च यन्मेधे यजुःष्वेव तु तच्च ह[1] ॥१६०॥
ऋचैव प्रैषसूक्तं स्यान्न यजुःष्वाद्रियेत तत्[2] ।
तेषां प्रैषकृतं[3] यच्च यच्च[4] दीर्घतमा जगौ ॥१६१॥
मेधातिथं[5] यदुक्तं च चौष्ठेवोभयवन्ति तु ।
ऋषिर्गृत्समदो[क][6] यच्च वाध्र्यश्व[ख]स्तु[7] यदुच्यते ॥१६२॥
नराशंसवदृचि[ग]स्तु[8] ददृशेऽथ[9] यदौर्वशः ।
तनूनपादगस्त्यस्तु[10] जमदग्नि[घ]स्तु[11] यज्जगौ ॥१६३॥
विश्वामित्र[ङ] ऋषिर्यच्च जगौ वै काश्यपोऽसितः[च] ।
मेधातिथेस्तृचां[12] यास्तु प्रोक्ता द्वादश देवताः ॥१६४॥

(१) तानि पठिति ख॰ ग॰ ङ॰ ।
(२) यजुष्यादि येषु चेति क॰ घ॰ च॰ ।
(३) प्रैषगतं सूक्तमिति ग॰ ।
(४) यच्च तच्चेति ख॰, यत्तु तच्चेति ङ॰ पुस्तकान्तरञ्च ।
(५) मेधातिथेरिति ख॰, मेधातिथाविति ग॰ ङ॰ पुस्तकान्तरञ्च ।
(६) ऋषौ गृत्समदे इति ग॰ ङ॰ पुस्तकान्तरञ्च ।
(७) वाध्र्यश्वे चेति ग॰ ङ॰ पुस्तकान्तरञ्च ।
(८) ऋचेश्चेति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च ।
(९) ददर्श चेति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च ।
(१०) चेति ग॰ ङ॰ पुस्तकान्तरञ्च ।
(११) वामदेवश्चेति ग॰, जामदग्न्यश्चेति ङ॰ पुस्तकान्तरञ्च ।
(१२) ऋचः इति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च ।

(क) ऋ॰ २, १९, ८ । (ख) ऋ॰ १०, ६९, ५ । (ग) ऋ॰ १, १२९;९ ।
(घ) ऋ॰ ३, ५३, १५ । (ङ) ऋ॰ ३, ५३, ९ । (च) ऋ॰ १, ४६, १० ।

समद्यन्ते यथाग्नीकाः(१) सम्पदं तां निबोधत।
इध्मो(क)यः सोऽय(२)मेवाग्निरयं होधो(ख)(३) समिध्यते।
ध्यातेवैतत्कृतं(४) रूपं ध्यातो(ग) होध्रः(५) समिध्यते(घ) ॥१६५॥

इति बृहद्देवतायां द्वितीयोऽध्यायः।

---

(१) यथाग्निं ताः इति ख॰ ग॰ ङ॰ पुस्तकान्तरेषु।
(२) सर्व्वमिति ख॰ ग॰ ङ॰ पुस्तकान्तरेषु।
(३) होध्रः इति ग॰ ङ॰ पुस्तकान्तरेषु।
(४) ध्यातैर्वैतत्कृतमिति क॰ ग॰ घ॰ च॰।
(५) होध्रे इति ग॰ ङ॰ पुस्तकान्तरेषु।

---

(क) ऋ॰ ८, ४९, २। (ख) ऋ॰ ७, १, १६। (ग) ऋ॰ ५, ८, ५।
(घ) ऋ॰ ४, १५; ४।

## अथ तृतीयोऽध्यायः ।



तनूनपादयन्त्वेव नाम्ना सोऽग्निरुच्यते तनूः(१) ।
नपा(क)दिति प्रजामाहुरमूतस्य(२) च सम्भवम् ॥ १ ॥
नराशंसन्त्विहैके तु(३) होत्रभिस्त्वाहुरध्वरे(४) ।
नराः शंसन्ति सर्व्वेऽस्मिन्नासीना इति वादिनः(५) ॥ २ ॥
तदाहुरग्निमेवायं(६) नराशंसोऽध्वरे लयम्(७) ।
नरैः शस्यत आसीनैराहुश्च ऋत्विजो नराः(८) ॥ ३ ॥
इला त्विति कृतं रूपं स्तुपिभिर्गतिकर्मणः(९) ।

---

(१) यच्छत्यसौ तनुमिति ख॰ ग॰ ङ॰ पुस्तकान्तरेषु ।
(२) अमृतोऽस्येति ख॰ ग॰ ङ॰ पुस्तकान्तरेषु ।
(३) नराशंसमिहैके त्विति ख॰ ग॰ ङ॰ पुस्तकान्तरेषु ।
(४) अग्निमाहुरथैतरे इति ग॰ ङ॰ पुस्तकान्तरेषु ।
(५) वाऽध्वरे इति ग॰ ङ॰ पुस्तकान्तरेषु ।
(६) एतमेवाहुरन्येऽग्निमिति ग॰ ङ॰ पुस्तकान्तरेषु ।
(७) स्मयमिति ख॰ ग॰ ङ॰ पुस्तकान्तरेषु ।
(८) पैवलिंगो नरः इति ख॰ ग॰ ङ॰ पुस्तकान्तरेषु ।
(९) इड त्विविधकृतं रूपमीडेश्च स्तुतिकर्म्मणः इति ग॰ ङ॰ पुस्तकान्तरेषु । इड इत्यत्र इप, इंडेश इत्यत्र ईप्सोश्चेति ख॰, स्तुतिकर्म्मणः इत्यत्र, गतिकर्म्मणेति च॰ ।

---

(क) ऋ॰ १, १३१, १ ।

इडावां(क)स्तेन चोक्ताग्निरिरिणा(ख)(१)गतिकर्मणा(२) ॥ ४ ॥
वर्हि(ग)रेवायमग्निस्तु सर्वं हि परिवृंहितम् ।
अन्नेन यः स्तुतो(३) वाघन्निभेन परिद्दृह्यते(४) ॥ ५ ॥
द्वार(घ)स्तु(५) देव्यो याः प्रोक्ता विज्ञेया नास्तु यत्नतः ।
अग्नायी(ङ)मनुवर्त्तन्ते तथाग्नाय्यग्निमेव च(६) ॥ ६ ॥
अग्नौ भुवं स्थितास्तास्तु(७) स्तूयन्ते चाग्निना(८) सह ।
प्राधान्यन्तासु चैवाग्नेः स्तुतिष्वथ(९)हविःषु च ॥ ७ ॥
नक्तोषा सा(१०) च ये देव्यावाग्नेय्यावेव ते स्तुते ।

---

(१) इड़िनेति ग०, ईड़िनेति ङ० पुस्तकान्तरञ्च ।
(२) वर्धिकर्मिणेति ग०, वर्धिकर्म्मणेति ङ०, वृद्धिकर्म्मणेति पुस्तकान्तरं ।
(३) यज्ञुत इति ग० ङ० पुस्तकान्तरञ्च ।
(४) परिवृंहित इति ग० घ० ङ० ।
(५) द्वारस्थेति ख० ग० ङ० पुस्तकान्तरञ्च ।
(६) श्चाग्नायीमन्ववर्त्तन्त नाग्निं नाग्नाय्य एव चेति क० घ० च० ।
(७) भुवास्थितत्वात्त्विति क० घ० च० ।
(८) संस्तूयन्तेऽग्निनेति ख० ग० ङ० ।
(९) स्तुतिष्वेवेति ग० ङ० पुस्तकान्तरञ्च।
(१०) नक्तोषाऽसौ इति ख० ग० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० ४, २, ५। (ख) ऋ० ८, ८०, १। (ग) ऋ० ३, ५३, १०।
(घ) ऋ० १, १३, ६। (ङ) ऋ० १, २२, १२।

श्यामाग्नेयी[१] हि कालस्य तस्यैवोषाः[क] कलैव तु[२] ॥ ८ ॥
तम उच्छन्त्यु[घ]षा नक्ता[ङ] नक्तोषां हिमबिन्दुभिः।
अपि वा[३] व्यक्तवर्णेति नक्तं पूर्वां वे[च]रिदं[४] भवेत्[५] ॥ ९ ॥
नाम्ना भवत्युषा[६]श्चैव सैषा[७] प्रागुदयाद्रवेः।
[८]सा हि दोषा[९] भवत्यादौ मध्ये प्राप्ते तमस्वती[१०] ॥ १० ॥
दैव्याविति[११] तु होताराबुभौ[१२] पार्थिवमध्यमौ।

---

(१) श्याम्याग्नेयीति ख०, श्यावाग्नेयीति ग०, श्याव्याग्नेयीति ङ० पुस्तकान्तरञ्च।
(२) किला(ख)ऽवमे(ग)ति क० घ० च०।
(३) अभि वेति ख०।
(४) वेरिदमिति ख०।
(५) तम उच्छन्त्युषेति श्लोकः क० घ० च० पुस्तकेषु न दृश्यते।
(६) उषाः इत्यत्र उषेति पाठः संगतः।
(७) प्रैषेति ख०।
(८) ख० ग० ङ० पुस्तकेषु, सा हि दोषेति श्लोकार्द्धं, नाम्ना भवत्युषाश्चैवेति श्लोकार्द्धात् प्राक्, पठितं।
(९) दोषेति क० घ० च०।
(१०) निशीथे सा तमस्विनीति ख० ग० ङ० पुस्तकान्तरञ्च।
(११) देव्याविमौति ख० ग०।
(१२) ध्यमौ इति ग० ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १, ४६, १। (ख) ऋ० १, ३२, ४। (ग) ऋ० ३, ५४, ५।
(घ) ऋ० १, ४६, १। (ङ) ऋ० १, ७२, ७। (च) ऋ० १, ७२, ६।

दिव्यादग्नेस्तु[१] जज्ञाते देव्यौ तेनेह जन्मना[२]॥ ११॥
तिस्रस्तु देव्यो याः प्रोक्तास्त्रिस्थानैवेह सा तु वाक्।
त्रिविधेनोच्यते नाम्ना ज्योतिःषु त्रिषु वर्त्तिनी॥ १२॥
अग्निमेवानुगेला[३] तु मध्ये त्वैन्द्री[४] सरस्वती।
असुं स्थिताधिलोकन्तु[५] भारती भारतो ह्यसौ॥१३॥
सैषा तु त्रिविधा वै वाग्दिवि च व्योम्नि चेह च।
व्यस्ता [६]चैव समस्ता च भजतेऽग्नीनिमानपि[७]॥१४॥
त्वष्टा तु यः सोऽयमेव [८]पार्थिवोऽग्निरिति श्रुतिः[९]।
पार्थिवस्यास्य वर्चः स्युः कृत्याप्रूक्[१०]चार्त्तवेषु च[११]॥१५॥
त्विषित[क]स्तुष्टुतो वा स्यात् [१२]तूर्णमश्नुवतीति वा[१३]।

(१) द्यौति ख० ग० ङ० पुस्तकान्तरञ्च।
(२) कथ्यत इति क० ख० ङ० च०।
(३) त्वनुग्नेलेति ख०, त्वनुसैलेति क० घ० च०।
(४) प्राप्तेति ख० ग० ङ० पुस्तकान्तरञ्च।
(५) स्थितत्रिलोकन्त्विति क० घ० च०।
(६) व्याप्तेति क० घ० च०।
(७) भजत्यग्नीनिमानन्विति क० घ० च०।
(८) त्वष्टामेवेति ख० ङ० पुस्तकान्तरञ्च, यत् स्वयं प्रोक्त इति ग०।
(९) स्तुतिरिति ख० ग० ङ० पुस्तकान्तरञ्च।
(१०) कास्थावीदिति ख०, कस्याप्टगिति ङ० पुस्तकान्तरञ्च।
(११) पार्थिवो वाश्राम्बे च कौत्सा त्रिष्वार्त्तवीषु चेति क० घ० च०।
(१२) तुच्चिते वा स्यादिति ख०, त्वच्चतेर्वा स्यादिति ग० ङ० पुस्तकान्तरञ्च।
(१३) त्वथुत एव वेति ख० ग०, वा इत्यत्र चेति ङ० पुस्तकान्तरञ्च।

(क) ऋ० १०, ८४, २।

कर्मसु त्वरणां वेत्ति (१)तेन नामैत(२)दश्नुते ॥१६॥
यः सहस्रतमौजस्तु (३)रवेश्चन्द्रमुपाश्रितः(४) ।
सोऽयं(५) त्वष्टारमेवाग्निः (६)परं वन्दे च यन्मधु(७)(क) ॥१७॥
मादाद्द्ध्या च (८)सुप्रीतः पुत्राय(९) यदथर्वणे(१०) ।
स चाभवदृषिस्तेन ब्रह्मणा वीर्यवत्तमः(११) ॥१८॥
तमृषि(१२)र्निषिषेधेन्द्रो (१३)मैवं वोचः (१४)कश्चिन्मधु ।
न हि मोक्षे मधुन्यस्मिन् जीवन्तं त्वोत्सृजाम्यहं(१५) ॥१९॥

---

(१) कर्मसूत्तारश्चो वेतीति ग० ङ०, वेतीत्यत्र वेत्तीति ख० पुस्तकान्तरञ्च।
(२) नाम्नैतदिति ख० ।
(३) सहस्रतमो रश्मिरिति ग० ङ० ।
(४) चन्द्रमसोऽश्रित इति क० घ० च० ।
(५) सोऽपीति ख० ग० ङ० पुस्तकान्तरञ्च ।
(६) त्वग्निमिति ग० ङ० पुस्तकान्तरञ्च ।
(७) वेदवत्तं मनुमिति ख०, वेद च यन्मध्विति ग०, वेद च यन्मध्विति ङ०, देव च यन्मध्विति पुस्तकान्तरं ।
(८) त्वपीति ख० ग० ङ० पुस्तकान्तरञ्च ।
(९) सुतायेति ख० ग० ङ० पुस्तकान्तरञ्च ।
(१०) तदथर्वण इति ख० ग० ङ० पुस्तकान्तरञ्च ।
(११) दीप्तिमत्तरः इति ख० ग० ङ० पुस्तकान्तरञ्च ।
(१२) तं तृषिरिति क० घ० च० ।
(१३) निषिषिधेन्द्र इति क० घ० च० ।
(१४) मेदं वाचः इति क० घ० च० ।
(१५) मधौ ब्रह्मन् जीवनं त्वदमुत्सृजे इति क० घ० च० ।

---

(क) ऋ० १, १४, १० ।

तमृषिं त्वश्विनौ देवौ विधिव[१]न्मध्वयाचतां[२] ।
स च ताभ्यां तदाचष्टे यदुवाच शचीपतिः ॥२०॥
तमब्रूतान्तु नासत्यावाश्वेन [३]शिरसाऽभवत् ।
मध्वाशु याचय त्वं त[४]न्नेन्द्रस्त्वां हनिष्यति[५] ॥२१॥
आश्वेन [६]शिरसा तौतु [७]दध्यङ्ङाह यदश्विनौ[८] ।
तदास्येन्द्रोऽहरत्तत्तं [९]न्यधात्तामस्य तौ शिरः[१०] ॥२२॥
दधीच[क]स्त[११]च्छिरस्त्वाश्वं हृतं वज्रेण वज्रिणा ।
पपात सरसो मध्ये पर्वते शर्यणावति[ख] ॥२३॥
तदश्वस्तु[१२] समुत्थाय भूतेभ्यो विविधान् वरान् ।

---

(१) विविक्ते इति ग० ङ० पुस्तकान्तरञ्च ।
(२) याचत्विति क० ख० ङ० च० ।
(३) वाश्व्येनेति ग० ङ० पुस्तकान्तरञ्च ।
(४) त्वावामिति क० ख० घ० च० ।
(५) नेन्द्रस्त्वावधीत्ततः इति ख० ग० ङ० पुस्तकान्तरञ्च ।
(६) चाश्व्येनेति ङ० पुस्तकान्तरञ्च ।
(७) ताभ्यामिति ख०, तत्त्विति क० घ० च० ।
(८) यदश्विनोरिति क० घ० च० ।
(९) तदस्येन्द्रो ह्यहरत्तेहेति ख० ।
(१०) यावन्नधत्तामस्य यच्छिर इति ग०, नवतामस्य यच्छिरः इति ख०, चान्यन्नधत्तामस्य यच्छिरः ङ० पुस्तकान्तरञ्च ।
(११) दधीचस्येति ग० ङ० पुस्तकान्तरञ्च ।
(१२) तच्छिरस्त्विति क० ख० घ० च० ।

---

(क) ऋ० १, ८४, १३ । (ख) ऋ० १, ८४, १४ ।

प्रादात्स[1]युगपर्यन्तं तास्वेवाप्सु न्यमज्जत[2] ॥२४॥
त्वष्टा रूपविकर्त्ता च योऽसौ माध्यमिके गणे ।
स्तुतः स च निपातेन[3] सूक्तान्तस्य न विद्यते ॥२५॥
[क]वनस्पतिं तु यं प्राहुरयं सोऽग्निर्वनस्पतिः ।
अयं वनानां हि पतिः पाता पालयतीति च[4] ॥२६॥
अग्निर्गृत्समदेना[ख]ऽयं वनस्पतिवदीडितः ।
मन्दस्वे[ग]त्यस्य [5]सूक्तस्य [6]षडृचस्य तृतीयया ॥२७॥
यूपवत्तत्त्ववच्चैव स्तुतिर्याच्च [7]प्रसङ्गजा ।
समस्तेनैव सूक्तेन [8]तृतीये सा तु मण्डले ॥२८॥
स्वाहाकृतीस्व[घ]सङ्ख्यास्तु [9]विदुषां मतयोऽभवन् ।

---

(१) प्रादायेति ख० ग० ङ० पुस्तकान्तरञ्च ।
(२) निमज्जतीति ख० ग० ङ० पुस्तकान्तरञ्च ।
(३) निपाते चेति क० घ० च० ।
(४) चेति क० घ० च० ।
(५) मन्दस्वेति चेति ग० ङ० पुस्तकान्तरञ्च ।
(६) सूक्ते चेति ग० ।
(७) यास्केति ग० ङ० पुस्तकान्तरञ्च ।
(८) सर्व्वेषां गतिसूक्तेनेति ख० ग० ङ०, सर्व्वेषां यतिसूक्तेनेति पुस्तकान्तरं ।
(९) क० घ० च० पुस्तकेषु, स्वाहाकृतास्त्वसंख्यास्त्विति पाठोऽस्ति । स्वाहाकृतयोऽनेकार्थेति ख० ग० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० ६, ४८, १०। (ख) ऋ० २, १६, ८। (ग) ऋ० १, २६, ५ ।
(घ) ऋ० १, १८८, ११ ।

तत्सर्वं सोऽय[1]मेवाग्निर्भवतीति विनिश्चय: ॥२८॥
अयं कर्त्ता च देवानां [2]साक्षतिस्तामिहैकशा।
अयं प्रसूतिर्भूतानां स तेषा[3]मयमव्यय: ॥३०॥
तनूनपा(क)द्वितीया तु [4]नराशंस(ख)वती च या।
समस्यते [5]प्रयोक्तव्ये चिर्व्वेवोभयवत्खिह[6] ॥३१॥
नराशंसवती वा स्या[7]द्द्वितीयेह [8]प्रजार्थिनां।
बलकामोऽथ वा य: स्या[9]द्भूरिमिच्छति वापि [10]य:[11] ॥३२॥
आग्नेयमिति[12] यत्त्वेभि[13]र्वैश्वदेवमिहोच्यते।

---

(१) तथमिति ग० ङ० पुस्तकान्तरञ्च।
(२) अयं हि कर्त्ता स्वाहानामिति ख० ग० ङ० पुस्तकान्तरञ्च।
(३) सर्व्वेषामिति ख० ग० ङ० पुस्तकान्तरञ्च।
(४) चेति ख० ग० ङ० पुस्तकान्तरञ्च।
(५) समस्येते इति ख० ग०, समर्थ्येते इति ङ० पुस्तकान्तरञ्च।
(६) उभयवस्त्विति ग०, उभयवत्तु विति ङ०, उभयवत्तु चेति पुस्तकान्तरं।
(७) चास्यादिति ग० ङ०।
(८) चेति ख० ग० ङ० पुस्तकान्तरञ्च।
(९) धनकामो वेति ख० ग० ङ० पुस्तकान्तरञ्च।
(१०) भूतिमिच्छेदथापीति ख० ग० ङ० पुस्तकान्तरञ्च।
(११) वेति ग०।
(१२) आग्नेयं सूक्तमिति ख० ग० पुस्तकान्तरञ्च, आग्नेये सूक्तमिति ङ०।
(१३) सूक्तमेभिर्यदिति ख० ग० ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १, १८८, २। (ख) ऋ० १, १४२, ३।

तदिन्द्रलिङ्गं गायत्रं [क]वैश्वदेवेषु शस्यते ॥२३॥
इन्द्रसोममितीन्द्रं तु [१]यदा दृशकमार्त्तवम् ।
तस्मिन् सहर्तुना सप्त प्रत्यृचं स्तौति देवताः ॥२४॥
तचर्त्तुनेति षट्सूचु चतस्रष्वृतुभिः सह ।
पुनर्द्वयोर्ऋतुनेति बहुलैकलक्षचिताः ॥२५॥
ऋतवो देवताभिश्च निपातेनेह संस्तुताः ।
अथर्तुमैषसूक्ते च तथा गार्त्समदेऽपि च[२] ॥२६॥
मुख्यया लिङ्गमेवास्तौ[३]मरुतस्तु द्वितीयया ।
तृतीयया तु त्वष्टारमग्निन्तु परया ततः[४] ॥२७॥
पञ्चम्या तु पुनः शक्रं षष्ठ्या देवावृतावृधौ ।
सप्तम्या द्याभिरग्निन्तु चतुर्भिर्द्रविणोदसं[ख] ॥२८॥
आदेशाद्दैवतं ज्ञेयमृङ्मन्त्राणां न[५] लिङ्गतः ।
न शक्यं लिङ्गतोऽप्यासां[६] ज्ञातुन्तत्त्वेन दैवतं[७] ॥२९॥

---

(१) इन्द्रसोमं पिबेतीममिति ख॰ ङ॰ पुस्तकान्तरच, इममित्यत्र इदमिति ग॰ ।
(२) तचर्त्तुनेति षट्सूचु इत्यादि तथा गार्त्समदेऽपि चेत्यन्तपाठः क॰ घ॰ च॰ चिह्नितपुस्तकेषु न विद्यते ।
(३) एवोर्चमिति क॰ घ॰, एवार्चमिति च॰ ।
(४) चतुर्थ्या चापि मेव चेति ख॰ ग॰ ।
(५) मन्त्राणान्त्विति क॰ घ॰ च॰ ।
(६) ह्यासामिति ख॰ ङ॰ पुस्तकान्तरच ।
(७) देवताः इति क॰ घ॰ च॰ ।

---

(क) ऋ॰ १, १० ३ । (ख) ऋ॰ ६, ८८, ३ ।

एकादश्या तु नासत्यौ[क] द्वादश्याग्निमिमं पुनः।
पृथक् पृथक् स्तुतीदन्तु सूक्तमाह रथीतरः[१] ॥४०॥
बहुदेवे द्विदेवे[२] वा गुणैर्वा[३] यच्च कर्मजैः।
स्तूयते देवतैकैका विभक्तस्तुति[४] तद्विदुः ॥४१॥
वैश्वदेवानि सूक्तानि त्रिविधानि भवन्ति तु।
सूर्यसंस्तवसंयुक्तं विश्वलिङ्गं पृथक्स्तुतिः[५] ॥४२॥
पृथक्स्तुति तु यत्प्रोक्तं तद्विद्या[६]द्बहुदैवतम्।
विश्वलिङ्गन्तु तद्यच्च विश्वैः स्वैः कर्मजैर्गुणैः[७] ॥४३॥
विश्वानुद्दिश्य यद्देवान् स्तौति[८] सूर्य्यमनेकधा।
देवानेवा[९]भिसंस्तौति तं प्राहुः सूर्य्यसंस्तवम् ॥४४॥
न तु भागोऽस्यसूक्तादौ[१०] न सूर्य्ये स्त्रौपधेषु वा[११]।

---

(१) रथान्तरः इति ख०।
(२) बहुदेवतद्वन्दे इति क० घ० च०, बहुदेवते द्वन्द्वे इति ख०।
(३) गुणैः स्वैरिति क० घ० च०।
(४) देवतैककामभक्तिस्तुतीति क० ख० घ० च०।
(५) पृथक् स्तुतीति निर्विसर्गान्तपाठः समीचीनः।
(६) यद्विद्यादिति क० घ० च०।
(७) कर्म्मभिः स्तुतः इति क० घ० च०।
(८) देवांस्तु यश्चेति क० घ० च०।
(९) देवैरेवेति क० घ० च०।
(१०) भागस्य सूक्तादाविति ख० ग० ङ० पुस्तकान्तरस्य, भागो स्वसूक्तादाविति च०।
(११) सूक्तेष्वेवेषसेषु वेति ग०, सूक्तेष्ववैषसेषु वेति ङ०।

---

(क) ऋ० १०, २४, ५।

न सावित्रे कयामी[क]ति न सूर्य्यायां[ख] क्रतौ मुखे[१] ॥४५॥
न चैवैवं प्रपादेषु[२] मन्त्रेष्वन्येषु केषुचित्।
न च यत्र सजोषेति पदं वा स्यात् सजू[ग]रिति ॥४६॥
यस्मिन्[३] प्रसङ्गादपि तु बह्वीनां परिकीर्त्तनम्।
वैश्वदेवं तदप्याह स्थविरो लोमकायनः[४] ॥४७॥
असंस्तुतं संस्तुतवत्[५] प्रदिष्टं दैवतं क्वचित्।
मन्त्रैस्तद्रूपयोऽर्चन्ति[६]तान्तु बुध्येत शास्त्रतः[७] ॥४८॥
आदौ तु मध्ये वान्ते च विधाद्यु च कर्मभिः[८]।
कर्माण्यनुपदिष्टानि प्रदिष्टान्यपि तु क्वचित्[९] ॥४९॥
कर्मैव तावत्सावित्र्यां निविदि स्तौति कर्मणा।

---

(१) मखे इति ग० ङ०।
(२) प्रवादेष्विति ख० ग० ङ०।
(३) यस्मिन्निति क० घ० च०।
(४) रोमकायनः इति ख० ङ०।
(५) स्तुतं वामीति ख० ग० ङ०।
(६) देवतास्तद्वयोऽर्चन्त इति क० घ० च०।
(७) शास्त्रविदिति ख० ग० ङ० पुस्तकान्तरञ्च।
(८) पृथक्त्वेषु च कर्तृभिरिति ग० च०, पृथक्केषु च कर्तृभिरिति पुस्तकान्तरं।
(९) द्रष्टवदिति क० घ० च०।

---

(क) ऋ० १, ३५, १। (ख) ऋ० ५, ७३, ५। (ग) ऋ० १, २३, ७।

यद्धेनुमप्यनडुहो[१] वोढा दोग्ध्यात्पुरेव वा ॥५०॥
भार्गवः स्तौति चाग्न्यादीन्मित्रादीनश्वसंस्तुतौ[२]।
यदैभिरिति चैतस्मिन् वैश्वदेवेऽग्निमर्चति ॥५१॥
तदाकूरादावन्ते च प्रायशोऽन्यां स्तुवन्नृषिः[३]।
प्रातर्योगात्[क][४] प्रसङ्गाद्वा स्तौत्यन्यामपि देवताम् ॥५२॥
यस्यां वदत्यर्थवादान्[५] सा ज्ञेया सूक्तभागिनी।
यान्तु स्तौति प्रसङ्गेन सा विज्ञेया निपातिनी ॥५३॥
चतुर्द्धा भण्यते[६] चास्मिन् सूक्ते वै[७] सूक्तभागिनी।
यस्मिन् सर्वांस्तु राजर्षीनृषीन् वापि स्तुवन्नृषिः ॥५४॥
मेधातिथिरगस्त्यस्तु[८] बृहदुक्थो मनुर्गयः[ख]।
ऋजिश्वा[ग] च सुकर्षस्य शार्यातो[घ] गोतमो लुशः[९] ॥५५॥

(१) यद्धेनुः सप्यनड्वाह्वाविति ङ॰ पुस्तकान्तरञ्च।

(२) चाश्वसंस्तुताविति क॰ ख॰ घ॰ च॰।

(३) चान्याः स्तुवन्नृषः इति ग॰ ङ॰ पुस्तकान्तरञ्च।

(४) प्रतियोगादिति ग॰ ङ॰ पुस्तकान्तरञ्च।

(५) वदन्त्यर्थपादाः इति क॰ घ॰ च॰।

(६) न तु व्याहन्यते इति क॰ घ॰ च॰।

(७) चेति ग॰।

(८) चेति ख॰ ङ॰।

(९) मानवो यमः इति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।

(क) ऋ॰ १०, ४१, २। (ख) ऋ॰ ६, २, ८। (ग) ऋ॰ ५, २९, ११।
(घ) ऋ॰ ३, ५१, ७।

स्वस्त्यात्रेयः परुच्छेपः कक्षीवा[क]न्नाभिरौर्वशः[१] ।
नाभाक[ख]श्चैव निर्दिष्टो दुवस्यु[ग]र्ममतासुतः[२] ॥५६॥
विहव्यः[घ] कश्यप ऋषि[३]र्वत्सारश्च नामथः[ङ] ।
वामदेवो मधुच्छन्दाः पार्थ्या दक्षसुता[४]दितिः ॥५७॥
गृत्समद[च]श्चर्षिर्देवाः सप्तर्षयश्च[५] ये ।
तापसोऽग्निर्ऋषिः[६] कुत्सः[छ] कुसीदी त्रित[ज] एव च ॥५८॥
बन्धुप्रभृतयश्चैव चत्वारो भ्रातरः पृथक् ।
विष्णुश्च नेजमेषश्च नाम्ना संवनन[७][झ]श्च यः ॥५९॥
एते तु सर्वे[८] एवास्य विश्वैः स्वैः कर्मजैर्गुणैः ।
समस्तैरथ च[९] व्यस्तैः पृथक्सूक्तेषु तुष्टुवुः ॥६०॥

---

(१) उर्व्वशरिति ङ॰ पुस्तकान्तरञ्च ।
(२) ममतासुता इति घ॰ च॰ ।
(३) चर्षिरिति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(४) पाथ्योदकसुतेति क॰ घ॰ च॰ ।
(५) देवास ऋषयश्चेति ङ॰ पुस्तकान्तरञ्च ।
(६) यमोऽग्नितापस इति ग॰ ङ॰ पुस्तकान्तरञ्च ।
(७) सञ्चवन इति ग॰ ।
(८) सर्व्वा इति क॰ घ॰ च॰ ।
(९) वेति ङ॰ पुस्तकान्तरञ्च ।

---

(क) ऋ॰ १, १२६, २ । (ख) ऋ॰ ८, ४०, २ । (ग) ऋ॰ १०, १००, १२ । (घ) ऋ॰ १, १०८, ६ । (ङ) ऋ॰ १, १३९, ९ । (च) ऋ॰ २, १९, ८ । (छ) ऋ॰ १, १०६, ६ । (ज) ऋ॰ १, ५२, ५ । (झ) ऋ॰ १०, ९३, १२ ।

पार्थिवो द्रविणोदा(क)ग्निः(१) पुरस्तादस्तु कीर्त्तितः।
तमाङ्गिरिन्द्रं दाढ्‌र्ल्वा(२)द्‌द्वेके तु बलवित्तयोः ॥६१॥
अयं हि द्रविणोदाऽग्निरयं दाता बलस्य हि।
द्रविणोदाग्निरेवायं द्रविणोदा(ख)स्तदोच्यते ॥६२॥
आग्नेयेष्ववदृश्येत(३) प्रवादाद्द्रविणोदसः।
(४)ऐन्द्रस्य नवकस्येह(५) यदैन्द्रावरुणं परम् ॥६३॥

---

(१) द्रविणोदोऽग्निरिति क० घ० च०।

(२) अतिदार्ढ्यादिति ङ० पुस्तकान्तरञ्च।

(३) आग्नेयेष्वेव दृश्यन्ते इति ग०।

(४) ख० ङ० चिह्नितपुस्तकयोः, पुस्तकान्तरे च ऐन्द्रस्य नवकस्येहेति श्लोकार्द्धात्प्राक्, द्रविणोदाग्निरेवायमिति श्लोको न विद्यते। तत्र,—

जायते च बलेनायमध्येत्यृषिभिरध्वरे।
हवींषि द्रविणा प्राहुर्हविषो यत्र जायते ॥
दानादस्यर्त्विजस्तेषां द्रविणोदास्ततः स्वयम्।
ऋचीणां पुत्र इत्येषां दृश्यते सहसोपदैः ॥
मध्यमाद्वा यतो जज्ञे तस्माद्वा द्रविणोदसः।

एतत्सार्द्धश्लोकद्वयं दृश्यते। ङ० चिह्नितपुस्तके द्रविणोदसः इत्यत्र द्राविणोदस इतिपाठ, पुस्तकान्तरे च अध्येत्यत्र अध्येतिति पाठोऽस्ति।

(५) नवकस्यादेति ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १, ९६, १०। (ख) ऋ० १, ९६, ७।

तस्योत्तरं तु [1]सोमानं स्तूयते ब्रह्मणस्पतिः।
ऋग्भिः पञ्चभिराद्याभि[2]स्तिसृभिः सदसस्पतिः॥६४॥
नराशंसो[क]ऽन्यया चर्चा सोमेन्द्रौ तु निपातितौ।
चतुर्थ्यां सोम इन्द्रश्च पञ्चम्यां दक्षिणा सह[3]॥६५॥
प्रसङ्गादृषिणा प्रोक्ताः सम्बन्धाः स्थानलोकयोः।
प्राजापत्यं तथैन्द्रः स्यादिति तस्येह नामनी[4]॥६६॥
कथिते द्वे च षट्चान्यान्येषाद्यादाः[5] प्रजापतिः।
[6]शिष्टानि यानि नामानि तानि वक्ष्याम्यतः परं॥६७॥
सप्तभिः कश्च कामश्च सदसस्पतिरेव च।
इलस्पति[7]र्वाचस्पतिस्तत[8]स्तु ब्रह्मणस्पतिः॥६८॥
तृतीयान्ते तु सूक्तस्य चतुर्थ[9] पञ्चमश्च यत्।

---

(१) तस्योत्तरे चेति क॰ ग॰ च॰।
(२) ग्रन्थाभिरिति ङ॰।
(३) तथेति क॰ ग॰।
(४) यानि तस्येह नामानि प्राजापत्यानि तानि त्विति ङ॰ पुस्तकान्तरञ्च।
(५) कथितानीह षण्ड्यानि तेषां त्वाद्य इति ङ॰ पुस्तकान्तरञ्च।
(६) शिष्टानीति श्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते।
(७) इडस्पतिरिति क॰।
(८) स्तुत इति ख॰ च॰।
(९) प्रथममिति ख॰ ङ॰ पुस्तकान्तरञ्च।

---

(क) ऋ॰ १, १४२, ३।

चतुर्भिरितरैस्तच[1] न सूक्तं नाप्यृगुच्यते[2]॥६९॥
सर्वाण्येव तु सर्वासां देवतानां प्रजापतेः ।
नामानि कथयन्त्येते सम्यग्भक्तिदिदृक्षवः ॥७०॥
तद्वाङ्गैस्तदेवं स्यादृष्टानामेव[3] हि स्तुतः ।
तैरेव चास्य कल्प्यन्ते[4] क्रतवश्च हवींषि च ॥७१॥
मरुद्भिर्मध्यमस्थानैः पर[5] मग्निस्तु पार्थिवः ।
नवकेनेह[6] सूक्तेन प्रतीत्य[7](क)मिति संस्तुतः ॥७२॥
मरुतां साहचर्य्यात्तु[8] सूक्तेऽस्मिन्नाग्निमारुते ।
मन्यते माध्यमञ्चैव[9] यास्कोऽग्निं न तु पार्थिवम् ॥७३॥
स्यादयं पार्थिवस्त्वेव[10] तथा रूपं हि दृश्यते ।

---

(१) स्त्वेनमिति क० घ० च० ।
(२) नापि त्वृचोऽश्नुते इति क० घ० च०, नानाप्यृचोऽश्नुते इति ग० ।
(३) एष इति ख० ग० ङ० ।
(४) तैरेवास्य प्रकल्प्यन्ते इति ख० ङ० पुस्तकान्तरश्च ।
(५) श्वयमिति क० ग० घ० च० ।
(६) नवर्चनेहेति ङ० पुस्तकान्तरञ्च ।
(७) प्रत्यक्षमिति ङ० ।
(८) वेति ङ० ।
(९) मध्यम त्वेवमिति ख० ङ० पुस्तकान्तरञ्च ।
(१०) पार्थिवेष्वेवेति ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० ७, ६८, ६ ।

भूयसे[क] वीतये[ख] चेति[१] वैद्युतेन तदस्ति हि[२] ॥७४॥
अथ स्याद्[३]भिधानस्य देवतायाः पृथक् पृथक्[४]।
ऋचोऽर्धर्चस्य पादस्य कथञ्जायेत[५] दैवतम् ॥७५॥
यथा निविदि सावित्र्यां स्तूयते कर्म कर्मणा[६]।
दोग्ध्री धेनु[ग]र्वोढानड्वानाशुः सप्तिपुरं धियाः[७] ॥७६॥
यथा वरुणमिचीया[८] वरुणः भाविता भुवत्[घ]।
सूक्तमायेणेभिरग्ने[९] परोक्ष्यं[१०] तत्र देवताः[११] ॥७७॥
शब्दानां दैपदादीनां द्विदेवबाऽदैवतम्।
असंस्तुतं संस्तुतवत्प्रदिष्टं दैवतं क्वचित् ॥७८॥

---

(१) ऊयसे नीतये चैतदिति क० घ० च०।
(२) वैद्युतेनैतदस्तिहेति ख० ङ०।
(३) ध्यतश्चिदिति ङ० पुस्तकान्तरञ्च।
(४) स्तुतौ स्तुताविति ख० ङ० पुस्तकान्तरञ्च।
(५) स्तायेतेति ख० ङ० पुस्तकान्तरञ्च।
(६) सूर्यकर्मणेति ङ० पुस्तकान्तरञ्च।
(७) तथैव चेति क० घ० च०।
(८) यथा च प्रष्ठो मिमीयाः इति क० घ० च०।
(९) यमेरिति ख० ङ० पुस्तकान्तरञ्च।
(१०) परोक्ष्यः इति ग०।
(११) परोक्षस्तत्र संस्तवः इति ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १, १८, १। (ख) ऋ० १, ५, ६।
(ग) ऋ० २, ३१, ७। (घ) ऋ० १, ३६, ८।

यत्र द्विदेवते मन्त्र एकवद्देवतोच्यते।
विभक्तस्तुति तद्विद्यात् बहुष्ववहुवच्च तत्(१) ॥७९॥
आशीर्वादेषु संज्ञास्तु कर्मसंस्थासु देवताः।
बह्वो हि बहुवच्च(२) द्विवद्वौ यत्र संस्तुतौ(३) ॥८०॥
सुधन्वन(क) आङ्गिरसस्या(ख)सन् पुत्रास्त्रयः पुरा(४)।
ऋभु(ग)र्विभ्वा(घ)(५)च वाज(ङ)श्च(६)शिष्यास्ते त्वष्टुरेव च(७) ॥८१॥
शिक्षयामास तांस्त्वष्टा त्वाष्ट्रं यत्कर्म किञ्चन।
परिनिष्ठितकर्माणो विश्वेदेवा उपाह्वयन् ॥८२॥
धेनुं सर्वदुघां चक्रुर्मृतं सवत्स्यते।
इहतस्ततयेऽश्विभ्यां रथं दिव्यं त्रिवन्धुरम् ॥८३॥
इन्द्राय च हरी देवमदितेनाग्निनापि यत्।

---

(१) बहुत्ववहुवच्च यदिति ङ० पुस्तकान्तरञ्च।
(२) बह्वो हि बहुवाच्यन्त इति ख० ङ० पुस्तकान्तरञ्च।
(३) द्विपदे यत्र संस्तुते इति क० ग० घ० च०।
(४) आसन् सुधन्वनः पुत्रास्त्रय आङ्गिरसस्य ये इति ख० ङ० पुस्तकान्तरञ्च।
(५) विभ्वेति ग० घ०।
(६) वायुश्चेति ख०।
(७) त्वष्टुश्च तेऽभवन्निति ख० ग० ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० ५, ४२, ११। (ख) ऋ० ४, ४०, १। (ग) ऋ० १, ११०, ७।
(घ) ऋ० १, ११६, १। (ङ) ऋ० १, २०, ८।

एकश्च समित्युक्ते ज्येष्ठो[१] द्वावित्यथाह च ॥८४॥
उक्त्वा ततश्चतुरमथान्यथोक्तं तत्र हर्षिताः ।
त्वष्टा च सविता[२] यैव[३] देवदेवप्रजापतिः ॥८५॥
सर्व्वान् देवान् समामन्त्र्य चात्ततत्त्वं ददुश्च ते ।
तेषामाद्यन्तयो[४] मात्रा दृश्यते मरु वस्तवः[५] ॥८६॥
विश्वेषां ते ततश्चक्रु[६]र्वाहमान्यायुधानि च ।
तृतीयसवने तेषां तैस्तु भागः प्रकल्पितः ॥८७॥
अपिव[क]त्सोममिन्द्रस्य तैस्तत्र सवने[७] [ख]सह ।
तेषां स्तुतिरिन्द्रसूक्तमय[८]मित्यार्भवं[९] परम् ॥८८॥

---

(१) ज्येष्ठेति पुस्तकान्तरं ।
(२) सवितेति ख० ।
(३) यैवेत्यत्र चैवेतिपाठः समीचीनः ।
(४) आद्यन्तयोरिति सविसर्गान्तपाठो युक्तः ।
(५) येनुं सवर्द्धुघामित्यदि दृश्यते मरुवस्तवः इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते । दृश्यते मरुवस्तव इत्यत्र, दृश्यन्ते वहव-स्तवा इति पाठः साधुः ।
(६) ततस्तत्प्रक्ते तद्ददिति ङ० पुस्तकान्तरेषु ।
(७) सवनैरिति ग० ।
(८) त्वयमिति क० ग० घ० च० ।
(९) इत्यर्चकमिति ग०ङ० पुस्तकान्तरेषु ।

---

(क) ऋ० १, ३२, ३। (ख) ऋ० १, ३६, ५।

इहेन्द्राग्नी स्तुतौ देवौ तृतीयस्यादिरश्विनौ[1] ।
हिरण्यपाणिं[2] सावित्री तिस्रस्त्वाप्यत[3] उत्तराः[4] ॥८९॥
एकाग्नेर्द्वे तु देवानां[5] द्वाद्श्यो देवपत्नयः ।
इन्द्राणी वरुणानी च आग्नेयी[6] च[7] पृथक् स्तुताः ॥९०॥
द्यावापृथिव्यौ द्वे च स्यात् स्योना[क]दिस्त्वेव पार्थिवी[ख][8] ।
देवानां वात इत्येषा[9] सूक्तशेषस्तु वैष्णवः ॥९१॥
वायोस्तोचेन्द्रवायुभ्यां द्व्यृचो द्वाभ्यां[10] ततः परम् ।
ऋचे[11] मित्रावरुणयोस्तथेन्द्राय मरुत्वते ॥९२॥

---

(१) आदितोऽश्विनाविति छ॰ पुस्तकान्तरञ्च।
(२) हिरण्यपाणिरिति पाठो युक्तः ।
(३) ऽप्यन्य इति ख॰, सावित्र्यत्रस्त्रोऽप्यत इति छ॰ पुस्तकान्तरञ्च।
(४) त्रतस्त्राप्यथोत्तराः इति ग॰ ।
(५) च देवीनामिति छ॰ पुस्तकान्तरञ्च।
(६) अग्नायीति ख॰ छ॰ पुस्तकान्तरञ्च।
(७) ता इति ख॰ छ॰ पुस्तकान्तरञ्च।
(८) ·मह्योर्द्वे स्योनेत्यृक् पार्थिवी स्मृतेति छ॰ ।
(९) यतो देवा इति देवीति क॰ घ॰ च॰ ।
(१०) ऋचो द्वाभ्यामिति क॰ ग॰ घ॰ छ॰ पुस्तकान्तरञ्च, तृचस्ताभ्यामिति ख॰ च॰।
(११) तृचः इति ग॰ छ॰ पुस्तकान्तरञ्च।

---

(क) ऋ॰ १, २२, १५। (ख) ऋ॰ ८, २५, ६।

स्तवो(१) विश्वेषां देवानां पूष्ण आघृणये(क) तृचः(२) ।
असक्तो हि हविस्तस्य दध्नः पूर्णे दृतौ(ख) रथे(३) ॥९३॥
आदधिग्घृतः पूषा स गोभिरिष्यते यतः(४) ।
यथा हि मधुनः पूर्णो दृतिर् स्तौति चाश्विनौ(५) ॥९४॥
आवर्त्तनिं मधुनेति दृतेरिव च दृश्यते(६) ।
अर्धाष्टमा अपां ज्ञेया अर्धर्चान्त्याग्निदेवता(७) ॥९५॥
कस्य नूनन्तु काम्याद्या आग्नेय्यृक् सवितुस्तृचः ।
भगभक्तस्य(ग) भागी वा परं यदिति(८) वारुणम्(९) ॥९६॥
स विश्वाहेति चाग्नेये त्वग्नेर्मध्यमस्य तु ।

---

(१) तृच इति ग॰ घ॰ ङ॰ च॰ ।
(२) आघृणयेति चेति ख॰, आघृणिरित्यृच इति ग॰, तथाघृणयेति चेति ङ॰ ।
(३) दृतौ रथे इति ङ॰ पुस्तकान्तरञ्च ।
(४) गोभिर्गोरिष्यते ततः इति ख॰ ।
(५) दृतिमर्थौति चाश्विनाविति ख॰, चाश्विनौ इति ङ॰ ।
(६) असक्तो हि हविस्तस्येत्यादि दृतिरेव च दृश्यते इत्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते ।
(७) अध्यर्धान्त्याग्निदेवतेति ख॰ ङ॰, अप्यर्धान्त्याग्निदेवतेति ग॰ ।
(८) हि यथेति ग॰ ।
(९) यश्चिद्धि वारुणे इति ङ॰ ।

---

(क) ऋ॰ १, २३, १४ । (ख) ऋ॰ ४, ४५, ३ । (ग) ऋ॰ १, २४, ५ ।

जराबोधे[क]ति विज्ञेया वैश्वदेव्युत्तमोत्तमा[1] ॥९७॥
पराश्वतस्रो यास्त्वैन्द्रे चेन्द्रोलूखलयोः स्तुतिः[2] ।
मन्येते[3] यास्ककार्थक्या[4]विन्द्रस्येति तु भागुरिः ॥९८॥
यच्चिद्धुलूखलस्य द्वे द्वे परे मुसलस्य तु ।
चर्माधिषवणीयं[5] वा सोमं वान्या प्रशंसति ॥९९॥
ऐन्द्रं यच्चिद्धि सत्येत्युत्तरश्चाश्विनात्तृचात्[6] ।
आश्विनादुत्तरस्त्वन्य उषस्य[7] स्तृच उत्तमः ॥१००॥
स्तूयमानः शश्वदिति भीतस्तु मनसा ददौ ।
शुनःशेपाय[ख] दिव्यन्तु रथं सर्वं हिरण्मयम् ॥१०१॥
आग्नेयं सूक्त[8]मैन्द्रे च[9] चिच्चिदित्याश्विनं ततः ।
स्तुतेऽर्थवादं कर्मैतदिन्द्रस्येति तु शंसति ॥१०२॥
पादोऽग्नये क्रयामीति मैत्रावरुण उत्तरः ।

---

(१) वैश्वदेव्युत्तमागमः इति क० ग० घ० च० ।
(२) यश्चेति मुसलोलूखलस्तुतिरिति ङ० पुस्तकान्तरञ्च ।
(३) मन्येतामिति ख० ङ० पुस्तकान्तरञ्च ।
(४) यास्ककाण्वक्याविति ङ० पुस्तकान्तरञ्च ।
(५) चर्माधिषवणीये इति ङ० ।
(६) आश्विनं तृचमिति ङ० ।
(७) आश्विनेत्युत्तरं कल्प औषस्य इति ङ० पुस्तकान्तरञ्च । कल्प इत्यत्र कल्पिरिति ख० ।
(८) यत्तमिति ख० ग० ङ० पुस्तकान्तरञ्च ।
(९) द्वे इति ङ० ।

---

(क) ऋ० १, २०, १०। (ख) ऋ० १, २४, १२।

तृतीयो रात्रिसंस्ताव[1] सूक्तं सावित्रमुच्यते ॥१०३॥
पञ्चेमानि जगौ दृष्ट्वा[2] सूक्तान्याङ्गिरसो मुनिः।
हिरण्यस्तूपतां प्राप्य[3] सख्य चेन्द्रेण शाश्वतम् ॥१०४॥
आग्नेयं प्रेति मारुतं क्रौलं[4] (क)चौषि पराण्यतः।
सूक्तमुद्[5]ब्राह्मणस्पत्य य रचन्ति चयस्तृचाः ॥१०५॥
वरुणार्यममित्राणां मध्य आदित्यदैवतः।
पौष्णं सपूषन्[6] षड्रौद्र[7]स्तृतीया न तु केवला ॥१०६॥
मित्रेण वरुणेनाव[8] विश्वैर्देवैश्च संस्तवः।
उक्तमवर्षिणा पूर्वमादेशाद्दैवतं विना ॥१०७॥
ज्ञातुं न शक्यते लिङ्गात्तथापि क्वचिदुच्यते।
आदित्या वसवो रुद्रास्तमग्र इति च स्तुताः ॥१०८॥
तृच सौम्योऽग्न[9] आग्नेये प्रगाथेनाश्विनौ स्तुतौ।

---

(१) रात्रिं स्तुता तृतीयेनेति ख०।
(२) दृष्ट्वेति ख० ग० ङ० पुस्तकान्तरञ्च।
(३) प्राप्त इति ख०।
(४) क्रौलमिति पुस्तकान्तरं।
(५) उत्तिष्ठेति ख० ङ० पुस्तकान्तरञ्च।
(६) सम्पुष्यन्निति पाठो विशुद्ध।
(७) पौष्ण रुद्रश्चरौद्रकेति ङ० पुस्तकान्तरञ्च।
(८) वरुणेनास्येति ख० ङ० पुस्तकान्तरञ्च।
(९) सौम्यम इति पुस्तकान्तरं।

---

(क) ऋ० १, ३७, १।

सहोपमा लिङ्गभाजा वयं सोमः सुदानवः[१] ॥१०९॥
अर्धर्चो देवदेवत्य एष इत्याश्विने परे ।
आदित्यं मन्यते यास्को हविषेति[२] सहस्तुतं[३] ॥११०॥
सहोपमे ततः सौर्य्यमुदुत्यमिति संस्तुतम् ।
भक्तिर्येन वरुणेषु रोगघ्नस्तृच उत्तमः ॥१११॥
रोगोपनुद[४]माद्याभ्यामुद्यन्नित्युत्तमे तृचे ।
अर्धर्चे तु द्विषद्द्वेष ऐन्द्रः सव्यः[५] (क)शतर्चिषु ॥११२॥
स्वयमिन्द्रसमं पुत्रमिच्छन्तोऽङ्गिरसो मुनेः ।
वव्रेव[६] सव्यो भूत्वर्षि[७] र्यांगिलात्पुत्रताङ्गतः ॥११३॥
प्रथमे मण्डले ज्ञेया ऋषयस्तु शतर्चिनः ।
क्षुद्रसूक्तमहासूक्ता अन्त्ये मध्येषु मध्यमाः[८] ॥११४॥

---

(१) उक्तमन्त्रर्षियोत्यादि वयं सोमः सुदानवः इत्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न विद्यते ।

(२) हविषेति पुस्तकान्तरं ।

(३) आदित्यमित्यादि श्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नोपलभ्यते ।

(४) रोगापनुद्धीति ग॰, रोगापनुतिविति ङ॰ ।

(५) अर्द्धर्चन्तु द्विषद्द्वेषदैन्द्राण्ष्टेति ङ॰ ।

(६) वव्रे चेति ख॰ ।

(७) भूत्वर्षैरिति क॰ ग॰ घ॰ च॰ ।

(८) प्रथमे मण्डले ज्ञेयेत्यादि अन्त्ये मध्येषु मध्यमा इत्यन्तपाठः क॰ घ॰ च॰ चिह्नितपुस्तकेषु नेष्यते ।

---

(क) ऋ॰ १, ८२, ५ ।

नवकं जातवेदस्यं नूचिद्यत्तु वया इति।
वैश्वानरीयं तत्सूक्तमाग्नेयन्तु ततः परम्[१] ॥११५॥
ऐन्द्राण्यस्मै तत[२]स्त्रीणि वृष्णे शर्धाय[क] मारुतम्।
आग्नेयानि तु पश्वे[ख]ति नवयश्चिद्धि वामिति[३] ॥११६॥
[४]दस्राश्विनानीमानीति इन्द्रावरुणयोः स्तुतिः।
सौपर्ण्यास्तु काश्चिच्च[५] निपात[६]स्तुतिषु स्तुताः ॥११७॥
उपप्रयन्तः[ग] सूक्तानि आग्नेयान्युत्तराणि षट्।
हिरण्यकेशो[घ] रजसस्तृचोऽग्नेर्मध्यमस्य तु॥११८॥
इत्येति[७] पञ्च चैन्द्राणि[८] यामित्यस्यां निपातिताः।

---

(१) वह्निमाग्नेयमुत्तरमिति ख० ङ० पुस्तकान्तरञ्च।

(२) इतः इति ङ०।

(३) नवषड्ढैमदानि त्विति ङ० पुस्तकान्तरञ्च।

(४) ङ०-चिह्नितपुस्तके पुस्तकान्तरे च, दस्राश्विनानीति श्लोकार्द्धस्थले, उपान्त्यं सप्तमेऽर्द्धर्चे न मैत्रावरुणं विदुरिति पाठोऽस्ति।

(५) या काश्चिदिति ग० ङ० पुस्तकान्तरञ्च।

(६) निपाताः इति ङ० पुस्तकान्तरञ्च।

(७) इन्द्रेतीति ख० ङ० पुस्तकान्तरञ्च।

(८) चैन्द्रायीति ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १, ३७, ४। (ख) ऋ० १, ६५, १। (ग) ऋ० १, ७४, १। (घ) ऋ० १, ७९, १।

दध्य[क]ङ्ङनुरथर्वा च मारुतानि प्रये ततः ॥११९॥
चत्वार्य्यानो[ख] वैश्वदेवे द्वे देवानां स्तुतिर्मता[१] ।
आनोभद्रास्च देवानां भद्रं यावच्छतं पुनः ॥१२०॥
मधुवातासृचे तस्मिन् परमं मध्वपीष्यते ।
माध्वर्या मन इत्येषां वैश्वदेवी च्छगिष्यते[२] ॥१२१॥
[३]अदितिर्द्यौरिति त्वस्यां विभूतिः कथिता[४]दितेः ।
त्वं सोमसौम्यमौपस्य[५] सेता उत्यास्तृचोऽश्विनोः ॥१२२॥
अग्निनाग्नेस्च[६] सोमस्य अग्नीसोमाविति स्तुतिः[७] ।

---

(१) चत्वार्य्यान इति सूक्ते देवानां स्तुतिरुत्तरेति क० ख० घ० च०, चत्वार्य्यानो इत्यत्र चत्वार्य्यामाविति ख० ।

(२) आनो भद्रास्च देवानामित्यादि वैश्वदेवी ऋगिष्यते इत्यन्तपाठः क० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते ।

(३) पुस्तकान्तरे, अदितिर्द्यौरिति श्लोकार्द्धं, आनो भद्रास्चेति श्लोकार्द्धात् परं पठितं।

(४) कथ्यते इति ख० ङ० पुस्तकान्तरस्च ।

(५) मेघस्यमिति ख०, मेधस्यमिति क० घ० च० ।

(६) अश्विनाग्ने· सखेति क० घ० च० ।

(७) विमं स्तुमे इति ङ० पुस्तकान्तरस्च।

---

(क) ऋ० १, ८०, १६ । (ख) ऋ० १०, ५५, ५।

गौतमादौशिजः[क] कुत्सपरुच्छेपादृषे:[१] परः ॥१२३॥
इमं कुत्स[ख] आङ्गिरसो ददर्शजातवेदसं जगाद षोडशर्चं।
पूर्वा देवा इत्यृचो देवदेवास्त्रयः पादा उत्तमायास्ततोऽर्द्धम् ॥१२४॥
तस्यैव वा यस्य तत्पूर्वमुक्तं मित्रादिभ्यो वात्र[२] षड्भ्यः प्रकृताभ्यः।
अन्त्योऽर्धर्चः षण्णां स्तुतानां पूर्वा देवाः पादैः स्तुतिभिः स्तुताः[३] ॥१२५॥
भरद्वाजे गृत्समदे वसिष्ठे नोधस्य[ग] गस्त्ये विमदे नभाके[घ]।
कुत्सेनोदर्के[४] बहुदेवतेषु तथा द्विदेवेषु समानदेवधर्माः[५] ॥१२६॥

(१) गोतमो नाम य ऋषि कुत्स आङ्गिरस इति क० घ० च०।
(२) वार्चेत्यत्र स्तुताप्रा इति क० घ०, स्तुताप्रो इति च०।
(३) ङ० चिह्नितपुस्तके पुस्तकान्तरे च,—

इमं कुत्स आङ्गिरसो ददर्श जातवेदसम्।
कुत्सादौर्घतमाश्चेत्यमध्ये तारूक्षधीयते॥
पूर्वा देवास्ततो देवास्त्रिभिः पादैस्तु संस्तुताः।
षोडशर्चं तथा सूक्तं जगाद चतुरित्यसौ।
अन्त्येऽर्द्धर्चे तु वा यस्य लिङ्गोक्तानां स्तुतौ गयः॥

इति पाठो वर्त्तते।
क० घ० च० चिह्नितपुस्तकेषु, कुत्साद्दीर्घतमाश्चेतीति श्लोकार्द्धस्थले कुत्सादीर्घतमा इति ते द्वे एवमधीयते। इति पाठोऽस्ति। इतीत्यत्र ग्रस्थदिति ग०।
(४) कुत्सेनोदर्केति क० घ० च०।
(५) समानधर्मिणा इति ख० ग० ङ० पुस्तकान्तरस्थ।

(क) ऋ० १, १८, १। (ख) ऋ० १, १०६, ६। (ग) ऋ० १, ६१, १४। (घ) ऋ० ८, ४०, ४।

द्वे विरूपे सूक्तमौषसाग्नये[1] समन्नये[क]ति द्रविणोदसेऽग्नये ।
वैश्वानरस्येति[2] वैश्वानरीयमुक्तमस्मात्पूर्व्वं शुचयेऽग्नये पुनः ॥१२७॥
जातवेदस्यं सूक्तमद्दस्रमेक ऐन्द्रात्पूर्व्वं कश्यपार्षं वदन्ति ।
जातवेदसे सूक्तमाद्यन्तु तेषामेकभूयस्त्वं मन्यते शाकपूणिः ।१२८॥
दृचाद्या[3] सहस्रर्चान्तं सूक्तं नानाविधं भवेत् ।
नवनवतिः पञ्चलचा ऋचः स्युः सचतुःशतम् ॥१२९॥
नानादैवतमेकार्थं छन्दोभिश्चित्रमुत्पथम्[4] ।
[5]सयोदृषेन्द्राणि पञ्च वैश्वदेवानि चन्द्रमाः १३०॥
चौष्ठेन्द्राग्नेय इन्द्राग्नी ततमित्यार्भवे परे ।
चित्रं[ख] गास्त्वनुगच्छन्तं क्रूराः साला[6] वृकी[ग] सुताः ॥१३१॥

---

(१) चौषस्यमग्नेर्वेति ङ० पुस्तकान्तरं ।

(२) वैश्वानरस्येति ये इति ग० ।

(३) दृचाद्यमिति पाठः शुद्धः ।

(४) वैश्वानरस्येति वैश्वानरीयमित्यादि छन्दोभिश्चित्रमुत्पथमित्यन्तपाठः क० घ० च० चिह्नितपुस्तकेषु न विद्यते । जातवेदस्यं सूक्तसहस्रमित्यादि छन्दोभिश्चित्रमुत्पथमित्यन्तपाठः ग० चिह्नितपुस्तके न दृश्यते । दृचाद्या सहस्रर्चान्तमित्यादि छन्दोभिश्चित्रमुत्पथमित्यन्तपाठः ख० चिह्नितपुस्तके नेष्यते ।

(५) क० घ० च० चिह्नितपुस्तकेषु सयोदृषेन्द्राणीति श्लोकार्द्धात् प्राक्, अथतः शुचयेऽग्नये वैश्वानरीयं जातवेदस इति जातवेदस्यम् । इत्यधिकं पठितम् ।

(६) शालेति ग० ङ० ।

---

(क) ऋ० १, ९६, १ । (ख) ऋ० २, ३४, १० । (ग) ऋ० १,११७, १८ ।

कूपे प्रक्षिप्य गा[1] सर्वांस्तत एवापजह्रिरे[2] ।
स तत्र सुषुवे सोमं मन्त्रवि[3]न्मन्त्रवित्तमः ॥१२२॥
देवांश्चावाहयन् सर्वांस्तच्छुश्राव बृहस्पतिः ।
आगच्छतोऽथ तान् दृष्ट्वा क्व वसत्यस्य तत्त्वसम् ॥१२३॥
सर्व्वे दृष्ट्वा वरुणस्यार्यम्ण इत्युपालभत् ।
कूपेष्टकाभिर्म्मर्पितान्यङ्गान्येवाभवन्मम ॥१२४॥
दृष्ट्वा सर्व्वानह स्तौमि यद्यप्येको न पश्यति[4] ।
बृहस्पतिप्रचोदिता विश्वेदेवगणास्तथ ॥१२५॥
जग्मुस्ते[5] तस्य त यज्ञ भागांश्च जगृहुः सह ।
बृहस्पति[6]स्त्रितस्यैतत्[7] ज्ञानं विज्ञानमेव च ॥१२६॥
दृष्टेनार्षेण सूक्तेन जगादर्धिरथाविति ।
द्यावापृथिव्यावीळेति आग्नेय[8] पाद उत्तरः ॥१२७॥
आश्विनं सूक्तमेव स्यादिदं रात्र्युपमो मुनिः ।

---

(१) ताः इति ख॰ ग॰ ङ॰ पुस्तकान्तरस्थ ।
(२) एवाप्य जह्रिरे इति ङ॰ पुस्तकान्तरस्थ ।
(३) तत्र सोम सुषावासौ मन्त्रवदिति ङ॰ पुस्तकान्तरस्थ ।
(४) आगच्छतोऽथेत्यादि यद्यप्येको न पश्यतीत्यन्तपाठ क॰ ग॰ घ॰ च॰ चिह्नितपुस्तके नोपलभ्यते ।
(५) आजग्मुरिति ख॰ ङ॰ पुस्तकान्तरस्थ ।
(६) बृहस्पतेरिति ख॰ ङ॰ पुस्तकान्तरस्थ ।
(७) त्रितस्यैतमिति क॰ घ॰ च॰ ।
(८) द्यावापृथिव्योरीळे चैवाग्नेय इति ङ॰ पुस्तकान्तरस्थ ।

इमा रौद्रं ततः[१] सौम्ये चित्रं पश्चाश्विनान्यतः ॥१३८॥
नासत्याभ्यामिति त्वन्ये अर्धर्गुदुःस्वप्ननाशिनी[२]।
ऐन्द्रश्च[३]वैश्वदेवश्च सोपर्णे प्रभुरुत्तरे ॥१३९॥
एषिर्दानश्च[४] भाव्यस्य[क] प्रातरित्यच शंसति।
कक्षीवता[ख] विद्विवेति[५] यदैन्द्रमुपदिश्यते ॥१४०॥
परोक्षं वैश्वदेवं[६] तत् प्रदिष्टं स्वरसामसु।
अधिगम्य गुरोर्विद्यां गच्छन् स्वनिलयं प्रति ॥१४१॥
कक्षीवानध्वनि श्रान्तः सुष्वापारण्यगोचरः।
तं राजा स्वनयो नाम भावयव्यसुतो[७]व्रजन् ॥१४२॥
क्रीडार्थं सानुगोऽपश्यत् सभार्यः सपुरोहितः।
अथैनं रूपसम्पन्नं दृष्ट्वा देवसुतोपमम् ॥१४३॥
कन्यादाने मतिं चक्रे वर्णगोत्राविरोधतः।
सम्बोध्यैनं स पप्रच्छ वर्णगोत्रादिकं तदा ॥१४४॥
राजन्नाङ्गिरसोऽस्मीति कुमारः प्रत्युवाच तम्।

(१) परमिति क० घ० च०।
(२) त्वन्येन्या दु:स्वप्ननाशिनीति क० ग० घ० च०।
(३) ऐन्द्रकदिति ङ०, ऐन्द्रं वेति च०।
(४) त्विति ङ०।
(५) कक्षीवतं कदित्यातीति क० ग० घ० च०।
(६) परोक्षे वैश्वदेवे इति ङ०।
(७) भावयव्यसुत इति ङ०।

(क) ऋ० २, १२६, १। (ख) ऋ० १, ११७, ६।

पुत्त्रोऽहं दीर्घतमस औचथ्यस्य(क) ऋषेर्नृप(१) ॥१४५॥
अथास्मै स ददौ कन्यां(२) दिव्याभरणभूषिताम्(३) ।
तावतश्च रथानश्वान् वीड्वङ्गान् वै(४) चतुर्युजः ॥१४६॥
वधूनां वाहनार्थाय धनकुप्य(५)मजाविकम् ॥
निष्काणां वृषभाणाञ्च(६) शतं शतमदात्पुनः ॥१४७॥
गवां सहस्रं षष्टीश्च सर्व्वाः खल्वरिधायसः(७)(ख) ।
शतमश्वाञ्छतं निष्कानथान् दशवधूमतः ॥१४८॥
चतुर्युजो गवाञ्चैव सहस्रं षष्ट्याधिकम्(८) ।
स्वनयाद्भावयव्याच्च कक्षीवान् प्रत्यपद्यत ॥१४९॥
प्रतिगृह्य च तुष्टाव प्रातः(९) पित्रे शशंस च ॥
एतदुत्तरसूक्तेन शतमित्यादिनोदितम्(१०) ॥१५०॥

---

(१) राजन्नाङ्गिरसोऽस्मीत्यादि औचथ्यस्य ऋषेर्नृपेत्यन्तःपाठः ख० चिह्नितपुस्तके न दृश्यते ।
(२) कन्याः इति ख० ।
(३) दशभारसमन्विताः इति ख० ।
(४) रथांश्चास्य दीपिनोऽश्वैरिति ख० ।
(५) धनं कुप्यमिति ख० ।
(६) निष्कानां शतमश्वानामिति ख० ।
(७) गवां सहस्रमिति श्लोकार्द्धं ख० चिह्नितपुस्तके न विद्यते ।
(८) षष्ट्युपाधिकमिति ख० ।
(९) ततः इति ख० ।
(१०) ख० चिह्नितपुस्तके, एतदुत्तरसूक्तेनेति श्लोकार्द्धस्थले, एतदुत्तरे सूक्ते शतमित्यादि चोच्यते इति पाठोऽस्ति, शतमश्वमन्वं निष्कानिति श्लोकार्द्धांशाक् पठितश्च ।

---

(क) ऋ० १, १५८, १ । (ख) ऋ० १, १२६, ५ ।

फलप्रदर्शनं तस्य क्रियते प्रायशस्त्विह।
द्वितीयान्तु पितापश्यत्सुगु(क)रित्यादिकामृचम् ॥१५१॥
कक्षीवतं(१) सर्व्वमिति भगवानाह शौनकः।
एषा तु दैर्घतमसी सोमलिङ्गा कथं भवेत् ॥१५२॥
उच्यते प्रातरि(ख)त्सूक्ते स्तनोर्दानेन हर्षितः।
राजर्षाग्रिमथाहाय सुगुरित्यादिना किल(२) ॥१५३॥
कर्माणि याभिः कथितानि राज्ञां(३)
दानानि चोच्चावचमध्यमानि।
नाराशंसी(ग)र्त्विमृचस्ताः प्रतीया-
द्याभिः स्तुतिर्दानवतीषु राज्ञां(४) ॥१५४॥
पश्चामन्दान् भावयव्यस्य गीता
जायापत्योर्द्वौ ऋचौ सम्प्रवादः(५)।

---

(१) काक्षीवतमिति पाठः समीचीनः।
(२) अधिगम्य गुरोर्विद्यामित्यादि सुगुरित्यादिना किलेत्यन्तपाठः क० घ० च० चिह्नितपुस्तकेषु न विद्यते। फलप्रदर्शनं तस्येत्यादि सुगुरित्यादिना किलेत्यन्तपाठोऽपि ख० ङ० चिह्नितपुस्तकयोर्न दृश्यते।
(३) कर्माणि यावन्ति कृतानि राज्ञेति ङ०।
(४) प्रतीयात् स्तुती दृष्टा यासु वरिष्ठराज्ञामिति ङ० पुस्तकान्तरच।
(५) सम्प्रवादो दृचेनेति क० घ० च०॥

---

(क) ऋ० १, १२५, २। (ख) ऋ० १, १, ४। (ग) १०, ८५, ६।

सम्बादं रोमशये(क)न्द्रराज्ञो-
रेते तृचौ(१)मन्यते शाकपूणिः ॥१५५॥
इन्द्रेण जायापत्योश्चेतिहासं
(२)तृचेऽस्मिन्मन्यते शाकटायनः ।
प्रादात्सुतां(३) रोमशां नाम नाम्ना
बृहस्पतिर्भावयव्याय राज्ञे ॥१५६॥

इति बृहद्देवतायां तृतीयोऽध्यायः ॥

---

(१) सम्वादमस्यास्त्वथ चैव ताभ्यामेते तृचौ इति ख० ङ० पुस्तकाभ्यादय ।
(२) तृचे इति ग० ।
(३) स तामिति ख० ङ० ।

(क) ऋ० १, १२६, ७ ।

# अथ चतुर्थोऽध्यायः ।

ततस्त[1]मर्थं हरिवान्[क]विदित्वा
प्रियं सखायं स्वनयं दिदृक्षुः ।
अभ्याजगामाशु शचीसखायः
प्रीत्यार्च्चयत्तं[2] विधिनैव[3]राजा ॥ १ ॥

अभ्याजगामाङ्गिरसी च तत्र
दृष्टा[4]तयोः सा चरणौ च वन्दे ।
इन्द्रः सखित्वादथ तामुवाच
रोमाणि ते सन्ति न सन्ति राज्ञि ॥२॥

सा बालभावादथ तां जगाद
उपोपमे शक्र परामृशेति ।
तां पूर्वयर्चाथ नृपः प्रहर्षा-
दन्वव्रजत्सोऽथ पतिं तु साऽब्रवीत्[5] ॥३॥

---

(१) तत्सर्वमिति ख० ङ० पुस्तकान्तरञ्च ।

(२) प्रत्यर्चितं तमिति ख० ।

(३) प्रत्यर्चितोऽसौ विधिना चेति ङ० पुस्तकान्तरञ्च ।

(४) दृष्ट्वेति ख० ङ० पुस्तकान्तरञ्च ।

(५) तां पूर्वया सान्त्वनया प्रहृष्टोवाच व्रजत्वाथ पतिं पतिव्रतेति क० घ० च० ।

---

(क) ऋ० ८, ९१, ४ ।

अथाग्नेये अग्निमित्युत्तरे च-
त्पञ्चैन्द्राणि प्रत[क]दैन्द्यृगच[१] ।
युवन्त[ख]मिन्द्रापर्वतौ[ग] सह स्तुता-
विन्द्रन्तु मेने यास्क एकं प्रधानं[२] ॥४॥
स्तूयेतघुः पर्वतो विद्धि वज्रो[३]
द्विवत्स्तुतौ चेन्द्रमाह[४] प्रधानं ।
आलावर्योरथ पञ्चेन्द्रवाय्वो[५]रेका
वायोरुत्तरं द्विप्रधानं ॥५॥
तत्र पञ्चवरुणं मित्रदेवा
दिवादिभ्यः[६] कथिताभ्यः परे द्वे
द्वे द्वे पदे संस्तुते[७] रोदसी च
देवायार्धर्चेन विभक्तमन्यत् ॥६॥

(१) अग्निमाग्नेये चत चत्वारि पञ्चेन्द्राणि प्रतदैन्द्यृगेकेति ङ० पुस्तकान्तरेषु ।
(२) विन्द्रन्तु मेन इह यास्कः प्रधानमिति क० ग० च० ।
(३) स्तुतस्तुतः पर्वतश्च यज्ञः इति क० ग० च० ।
(४) चन्द्रमाहुरिति क० ग० च० ।
(५) आलावयदैन्द्रवाय्वोरिति क० ग० च०, आलावायोश्चाथ पञ्चेन्द्र-वाय्वोरिति ग० ।
(६) दिव्य आद्याः इति ङ० ।
(७) द्वे चापदे संस्तुताविति ङ० ।

(क) ऋ० ८, १३, २० । (ख) ऋ० ८, ७१, ३ । (ग) ऋ० ३, ५३, १ ।

मैत्रावरुणं सुसुमे[क]ति सूक्तं[१]
प्रप्र[ख]पोष्णं वैश्वदेवं द्वितीयं[२]।
एतत्सूक्तं[३] वैश्वदेवं तृतीयं
वैश्वदेवं स्या[४]द्बहुदेवतेषु ॥७॥
बहुग्रस्तु वैश्वदेवेषु संस्तवः[५]
अर्धर्चा[६] द्विपदास्त्रिपदाश्च।
द्विप्रधाना अपि चैकप्रधाना
बहुप्रधाना अपि वैश्वदेवाः[७] ॥८॥
वैश्वदेवी मित्रावरुणी द्वितीया
तिस्रोऽश्विभ्यां तत ऐन्द्री ततोऽग्नेः।
मारुत्येका तत ऐन्द्राग्न्यनन्तरा
बार्हस्पत्या चोत्तमा स्तौति देवान् ॥९॥

---

(१) सुसुमेतीह सूक्तमिति ख०, ग० ङ० पुस्तकान्तरञ्च।

(२) तृतीयमिति क० ग० घ०।

(३) यस्तु श्रौषदिति ङ०।

(४) वैश्वदेवं हि स्यादिति ङ०।

(५) सन्धृच इति क० ग० घ०।

(६) अर्धर्चाविति क० ग० घ०।

(७) अपि ता वैश्वदेव्य इति ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १, १२०, ९। (ख) ऋ० १, ४०, ७।

ऋषीनृषिर्वा स्तौति दध्यङ्मेऽस्या-
मात्मानं वा तेषु सं मन्यमान[१]।
तस्मादस्यां विप्रवदन्ति केचित्
इन्द्राग्नी तस्यां तु[२] निपातभाजौ ॥१०॥

आस्तामुचथ्य[क]बृहस्पती ऋषिपुत्रौ बभूवतुः।
आसीदुचथ्यभार्या तु ममता नाम भार्गवी ॥११॥
तां यवीयान्[३] बृहस्पतिर्मैथुनायोपचक्रमे।
शुक्रस्योत्सर्गकाले तु गर्भस्तं प्रत्यषेधत[४] ॥१२॥
इहास्मिन् पूर्वसम्भूतो न कार्य्यः शुक्रसङ्करः।
तच्छुक्रप्रतिषेधं तु न ममर्ष बृहस्पतिः[५] ॥१३॥
स व्याजहार तं गर्भं तमस्ते दीर्घमस्त्विति।
स च दीर्घतमा नाम बभूवर्षिरुचथ्यजः ॥१४॥
स जातोऽप्यतप[६]ल्लोकानेनसा[७]दन्धतां गतः।

---

(१) ऋषयामर्थाम स्तौति प्रथम लभेति क॰ घ॰ च॰। ऋषयामर्थाम इत्यत्र चहमेवायमर्थाम इति ग॰।
(२) केचिदिन्द्रो त्वेवेति क॰ घ॰ च॰।
(३) कनीयानिति क॰ घ॰ च॰।
(४) प्रत्यभाषतेति क॰ ग॰ घ॰ च॰।
(५) तं शुक्रप्रतिषेधात तु बृहस्पतिरमर्षयदिति घ॰।
(६) अत्यतपदिति ग॰ घ॰, अत्यतरदिति ग॰ घ॰ पुस्तकान्तरे।
(७) अन्धकारादिति ग॰ ग॰ घ॰।

(क) ऋ॰ ८, ४६, २८।

ददुर्देवा स्तुता नेत्रे ततोऽनन्धो बभूव च[१] ॥१५॥
स वेदिषद् इत्यस्तौ[२] चतुर्भिर्जातवेदसं।
समिद्ध आप्रियोऽन्त्यैन्द्री तमित्यग्नेः पराणि षट्[३] ॥१६॥
स्तुतौ तु मित्रावरुणौ सूक्तैर्मित्रमिति त्रिभिः।
मित्रं मैत्री वदत्येता[४] माधेनवस्य शंसति ॥१७॥
अदितिं वाय वाय्वग्निं तथा रूपं हि दृश्यते।
अग्निं मेने दितिं त्वेव कुत्से चेह[५] च शौनकः ॥१८॥
ऋषिरत्र प्रसङ्गाद्वा दर्शनाद्वानुकीर्तयेत्[६]।
विष्णोर्नुकमिति त्रीणि वैष्णवानि पराण्यतः ॥१९॥
भवः पान्तं चतुर्भिस्तु[७] इन्द्राविष्णू सह स्तुतौ।
गृहाणि वा वैष्णवानि ऋषिस्त्वेत्यृचि[८] कांक्षति ॥२०॥

(१) तु तस्याक्षी नैते न त्वन्धतां गत इति क॰ घ॰ च॰।
(२) इत्याद्यैरिति ङ॰।
(३) आप्रः परैन्द्रो षड्भि॰ त्वग्निं तमित्यत इति क॰ घ॰ च॰, आप्रि-
त्योन्त्यैन्द्री प्राग्यावाभिः पराणि चेति ग॰।
(४) मैत्रीव देवतामिति ङ॰।
(५) यास्कः कुत्सो वेदेति ङ॰ पुस्तकान्तरञ्च।
(६) ऋषिरत्रैः प्रसक्तत्वाद्दृष्टामौनमनुकीर्तयेदिति ङ॰।
(७) भवपात्तद्वाभिर्यांग्मिरिति ग॰, तथा पत्तद्वाभिर्यांग्मिरिति ङ॰
पुस्तकान्तरञ्च।
(८) तावामित्यृचीति ग॰ ङ॰ पुस्तकान्तरञ्च।

जीर्णन्तु दीर्घतमसं विप्रास्तत्परिचारिणः[१] ।

दासा अथ[२] नदीतोये दृष्टिहीनमुपादधुः[३] ॥२१॥

तस्यैकस्त्रैतनो[४][क] नाम शस्त्रेणैनमपाहनत् ।

शिरोऽंसावुरश्चैव स्वयमेव न्यकृन्तत[५] ॥२२॥

अङ्गदेशसमीपे तु नद्यः सर्वाः समुत्क्षिपन्[६] ।

[७]अजयामास चोत्थाय[८] कक्षीवत्प्रमुखानृषीन् ॥२३॥

---

(१) तत्परिचारका इति ख० ङ० पुस्तकान्तरयोः ।

(२) दासा अथेति क० ग० घ० ।

(३) उपादधुरिति क० ग० घ० ।

(४) त्रैतनः इति क० ग० घ० ।

(५) ख० ङ० पुस्तकयोः पुस्तकान्तरे च,—

हत्वा दीर्घतमासं तु पापेन महता वृतम् ।

आत्मनाप्यन्यमुरश्चैव ततोऽसम्मोहितो भृशम् ।

इत्यधिकं पठितम् ।

(६) तं नद्यं समुदक्षिपदिति ङ० पुस्तकान्तरयोः ।

(७) अजयामास चोत्थायेति प्रोक्तार्थलाभात्, ख० ङ० पुस्तकयोः पुस्तकान्तरे च,—

अङ्गराजगृहे सुप्ता सुदेष्णां पुत्रकाम्यया ।

राज्ञा च प्रहिता दासी भार्या मता महात्मनः ।

इत्यधिकं पठितम् ।

(८) सोऽजीजनत्प्रसेकादिति ख० ङ० पुस्तकान्तरयोः ।

---

(क) ऋ० १,।१५८, ५ ।

तुष्टाव चैव सूक्ताभ्या[1]मबोधीत्यश्विनावृषिः ।
प्रेति द्यावापृथिव्यौ तु[2] पराभ्यामेतदुत्तरं ॥२४॥
किमाभेवं परं[3] मानो मेध्यस्याश्वस्य संस्तवः ।
ईर्मा[क]ता म इति लब्धां नीयमानं प्रशंसति ॥२५॥
स्वयूथ्यास्तस्य चैवाच बहवः संस्तुता हयाः ।
नियुक्ताश्चानियुक्ताश्च प्रसङ्गादनुकीर्त्तिताः ॥२६॥
संज्ञप्तवदसंज्ञप्तं हविर्ष्यं[ख] चाह सूनवः[4] ।
तस्मिन्मांसस्य सूनस्य चतुर्थां हविषस्तथा[5] ॥२७॥
वासोऽधिवासयोश्चाच स्वधिते[ग]श्च प्रकीर्त्तनं[6] ।
गाचशूलस्थूणाना[घ]श्च[7] स्वधितेश्च प्रकीर्त्तनं[8] ॥२८॥

---

(१) चेति वस्तुताभ्यामिति ङ० पुस्तकान्तरञ्च ।
(२) द्यावापृथिव्यातेति ङ० पुस्तकाग्रञ्च ।
(३) परे इति ङ० पुस्तकान्तरञ्च ।
(४) भविष्यं चाह भूतवत् इति ख० ङ० पुस्तकान्तरञ्च ।
(५) चतुर्थी हविमत्तथेति ग०, तस्यौनस्य च मांसस्य चरूया क्व विषा-न्तथेति ङ० पुस्तकान्तरञ्च ।
(६) यद्दिग्रस्यञ्च कीर्त्तितमिति ख० ग०, वासाधिवाससोश्चाव यज्ञीभस्य च कीर्त्तनमिति ङ० ।
(७) गात्रशूलस्थूपायाश्चेति ख० ङ० ।
(८) क० घ० च० चिह्नितपुस्तकेषु, गात्रशूलस्थूणानाश्चेतिश्लोकार्द्धं न पठितम्'।

---

(क) ऋ० ४, २७, २ । (ख) ऋ० १, १६२, ४ । (ग) ऋ० १, १६२, १८ । (घ) ऋ० ५, ६२, ७ ।

भागस्य(१) कीर्त्तनं चात्र इन्द्रापूष्णोः सह स्तुतिः(२) ।
सूक्तं यदस्य(३) वामीयं वैश्वदेवं तदुच्यते ॥२८॥
प्रवादा विविधास्तत्र देवानां चात्र कीर्त्तनं ।
अग्निस्तु वामः पलितो[क] वायुर्भ्राता तु मध्यमः ॥३०॥
एतस्य[ख]स्तृतीयोऽत्र(४) सप्त वै रश्मयस्तु ताः ।
परास्तु कथयन्त्यग्निं(५) यथा वर्षति पाति(६) च ॥३१॥
अहोरात्रदिना(७)न्मासानृतूंश्च परिवर्त्तनं(८) ।
पञ्चधा त्रिविधा(९) चैव षोढा द्वादशधैव च(१०) ॥३२॥
संवत्सरं चक्रवञ्च पराभिः कीर्त्तयत्यृषिः ।

---

(१) छागस्येति ग॰ ङ॰
(२) इन्द्रापूष्णोश्च कीर्त्तनमिति ख॰ ङ॰ ।
(३) यदस्येति ङ॰ ।
(४) तृतीयोऽत्र इति ङ॰ ।
(५) अग्निरिति ङ॰ ।
(६) वातीति ख॰ ङ॰ ।
(७) अहोरात्रात् दिनानिति ङ॰ ।
(८) पर्वाश्च परिकीर्त्तनमिति ङ॰ ।
(९) पञ्चधा च त्रिधेति ख॰ ङ॰ ।
(१०) द्वादशधापि चेति ङ॰ ।

---

(क) ऋ॰ १, १३३, ४ । (ख) ऋ॰ १, १६४, १ ।

चत्रज्ञानं(१) च धेनुञ्च गौरीं वाचं सरस्वतीं ॥२३॥
धर्मं पूर्व्वयुगीयञ्च(२) साध्यान् देवगणांस्तथा।
विविधानि च कर्म्माणि लग्निवायुविवस्वताम् ॥२४॥
विभूतिमग्नेर्वायोश्च जगती स्थान(३)सङ्गमे।
हरणं रश्मिभिश्चैव(४) विसर्गं(५) पुनरेव च ॥२५॥
कर्म्मानुकीर्त्तनञ्चात्र(६) पर्जन्याग्निविवस्वतां।
मातापुत्रौ तु वाक्प्राणौ माता वागितरः सुतः ॥२६॥
सरस्वन्तमिति प्राणा(७) वाचं प्राहुः सरस्वतीं।
शरीरमिन्द्रियैर्युक्तं क्षेत्रमित्यभिधीयते ॥२७॥
वेद तत्प्राण(८) एवैकस्तस्मात् क्षेत्रज्ञ उच्यते।
मेघः(९) शक(क) स्तस्य धूमः(१०) सलिलं वास एव वा ॥२८॥

---

(१) क्षेत्रज्ञानमिति ग०, क्षेत्रं ज्ञानमिति ङ०।
(२) पूर्व्वयुगानाञ्चेति ख० ङ०, धर्मपूर्व्वयुगौ पञ्चेति ग०,
(३) जगति स्थास्विति ख० ङ०।
(४) वारः इति ख०, वारामिति ङ०।
(५) विसर्पमिति ख०।
(६) चात्येति ख० ङ० पुस्तकान्तरञ्च।
(७) प्राण इति क० ग० घ० च०।
(८) वेत्त्येतत्प्राण इति ङ०।
(९) मेघे इति ख०।
(१०) धूमे इति ख०।

---

(क) ऋ० ८, ८०, ३।

सोम उच्चा(क)भवन्त्यस्य पावकाश्च त्रयोऽधिपाः ।
गौरीरं तं वैश्वदेवमुपरि स्यात्पृथक् स्तुतिः ॥३८॥
इन्द्रं मित्रमिमौ सौर्य्यौ सौरी चान्त्या सरस्वते(१) ।
मारुतेन्द्रस्तु संवादः कयेति(२) परमः स्तनः(३) ॥४०॥
मरुतामयुज(४)स्त्वैन्द्र्यो युग्माः सर्व्वाः(५) सहान्त्यया ।
एकादशी प्रथमा च मारुतस्तृच उत्तमः(६) ॥४१॥
इन्द्रस्यैव तु तत्रोक्तं कर्त्तृत्वमितरस्य तु ।
इतिहासं पुरावृत्तमृषिभिः परिकथ्यते(७) ॥४२॥
समागच्छन्मरुद्भिस्तु(८) चरन् व्योम्नि शतक्रतुः ।

---

(१) क॰ ख॰ घ॰ च॰ पुस्तकेषु, मेघः शकस्तस्य धूम इत्यादि सौरी चान्त्या सरस्वते इत्यन्तपाठो न विद्यते, तेषु च तत्स्थले,—

सूक्तमल्पफलं त्वेतज्ज्ञानमेव प्रशंसति ।
प्रवादवञ्चनत्वाच्च ततः सलिलमुच्यते ॥

इति पाठो वर्त्तते ।

(२) कयेतीति ख॰ ।

(३) ततः इति ख॰ ङ॰ ।

(४) मरुतः इति ङ॰ ।

(५) सर्वेति ङ॰ ।

(६) उत्तरः इति ग॰, मारुत्यश्चैव उत्तरा इति ङ॰ पुस्तकान्तरेच ।

(७) इन्द्रस्यैव तु तत्रोक्तमित्यादि ऋषिभिः परिकथ्यते इत्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नेष्यते ।

(८) चेति ख॰ ङ॰ ।

---

(क) ऋ॰ १, १०६, २ ।

दृष्ट्वा तुष्टाव तानिन्द्रस्तेनैन्द्र[१]मृषयोऽब्रुवन् ॥४३॥
तेषामगस्त्यः संवादं तपसा वेद[२]तत्त्वतः।
स तानभिजगामाशु निरूप्यैन्द्रं हविस्तदा ॥४४॥
मरुतस्ताभितुष्टाव सूक्तैस्तदिति च[३] त्रिभिः[४]।
महश्चिदिति चैवेन्द्रं सहस्रमिति चैतया[५] ॥४५॥
निरूप्तं तद्धविश्चैन्द्रं मरुद्भ्यो दातुमिच्छति[६]।
विज्ञायावेत्य तद्धव्यं लिन्द्रो[७] नेति तमब्रवीत्[८] ॥४६॥
न श्वो नाद्यतनं ह्यस्ति वेद कस्तद्यदद्भुतं।
कस्यचित्तत्र सञ्चारे[९] चित्तमेव विनश्यति ॥४७॥
किञ्च इत्यब्रवीदिन्द्रमगस्त्यो भ्रातरस्तव।
मरुद्भिः सम्प्रकल्पयस्व[१०]वधीर्मा च[११] शतक्रतो ॥४८॥

---

(१) ते चैन्द्रमिति ख० ग० ङ० पुस्तकान्तरञ्च।
(२) तपसावोधीति ख० ङ० पुस्तकान्तरञ्च।
(३) तन्विति लिति क० घ० च०।
(४) तन्विति पञ्चभिरिति ग०।
(५) महश्चिदित्यनेनैन्द्रं सहस्रं त ऋचाद्ययमिति ख० ङ० पुस्तकान्तरञ्च।
(६) इच्छयेति ख०, इच्छतः इति ङ० पुस्तकान्तरञ्च।
(७) तद्भावमिन्द्र इति ख० ङ० पुस्तकान्तरञ्च।
(८) ततोऽब्रवीदिति ख० ङ० पुस्तकान्तरञ्च।
(९) तथंसञ्चारे इति ख० ङ० पुस्तकान्तरञ्च।
(१०) सम्प्रकल्पस्वेति ख० ङ०।
(११) मा नः इति ख० ङ० पुस्तकान्तरञ्च।

किं नो भ्रातरिति तस्मामिन्द्रो मान्यमुपालभत् ।
अगस्त्यस्त्वरमित्यस्या सुम्न[१]मिन्द्र प्रशामयत्[२] ॥४८॥
प्रादात्सवनन[३] कृत्वा तेभ्य एव च तद्धवि ।
पूर्व्वया सान्त्वयन्निन्द्रो ह्यगस्त्य स्नेहकाम्यया ॥५०॥
एव सवनन कृत्वा प्रादात्तेभ्य स तद्धवि[४] ।
सुते[५] चकार सोमे च[६] तानिन्द्र सोमपीथिन[क] ॥५१॥
तस्मादिद्याभिपातेन[७] ऐन्द्रेषु[८] मरुतस्तु तान्[९] ।
प्रीतात्मा पुनरेवर्षिस्तास्तुष्टाव पुन पृथक्[१०] ॥५२॥
मरुत प्रेति सूक्ताभ्या[११] मिन्द्र षड्भि परैस्तु स[१२] ।

---

(१) कुद्धमिति ख० ङ० पुस्तकान्तरञ्च ।
(२) प्रसादयदिति ख० ङ० प्रसाधयदिति पुस्तकान्तरम् ।
(३) सङ्गमनमिति क० ग० घ० च० ।
(४) पूर्व्वया सान्त्वयन्निन्द्र इत्यादि स तद्धविरित्यन्तपाठ क० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।
(५) सूते इति ग० ।
(६) सोमेऽप्येति ख० ङ० पुस्तकान्तरञ्च ।
(७) निपातेष्विति ङ० पुस्तकान्तरञ्च ।
(८) मन्त्रेष्विति ख० ।
(९) मरुत स्तुता इति ङ० पुस्तकान्तरञ्च ।
(१०) पृथक् पृथगिति ख० ङ० पुस्तकान्तरञ्च ।
(११) प्रतिसूक्ताभ्यामिति ख० ङ० पुस्तकान्तरञ्च ।
(१२) गायन षड्भि शचीपतिरिति ख० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १०, १५, ८ ।

ऋतुस्नाता(१) ऋषिभार्यां लोपामुद्रां यशस्विनीं ॥५३॥
उपजल्पितुमारेभे रहःसंयोगकाम्यया ।
द्वाभ्यां सा त्वब्रवीदृग्भ्यां पूर्वीरिति चिकीर्षितं ॥५४॥
रिरंसुस्तामथागस्त्य उत्तराभ्यामतोषयत् ।
विदित्वा तपसा सर्वं तयोर्भावं रिरंसतोः ॥५५॥
उक्तेन(२) स्तुतवानस्मिन्(३) ब्रह्मचार्युत्तमे जगौ ।
प्रशंस(४) तं परिष्वज्य गुह्य मूर्ध्न्यवजिघ्रतु ॥५६॥
स्विलैनमाहतुश्चोभावनागा असि(५) पुत्रक ।
युवो(क)रजांसीति ततः सूक्तैः पञ्चभिरश्विनौ ॥५७॥
अगस्त्य एव तुष्टाव सूक्तेन कतरे तुए(६) ।
द्यावापृथिव्यौ सूक्तेन आनो विश्वान् दिवौकसः ॥५८॥
पितु(ख)मन्नं समिद्धाग्नो अग्निमग्ने नयेति च(७) ।
बृहस्पतेरनर्वाणं(ग) कंकतोपनिषत्परं(८) ॥५९॥
अपां तृणानां सूर्यस्य केचिदेतां स्तुतिं विदुः ।

(१) ऋतौ स्नातामिति क० घ० च० ।
(२) न त्वेनः इति ख० ग०, नत्वेतदि ङ० पुस्तकान्तरञ्च ।
(३) वसीति ख० ग० ङ० ।
(४) प्रशस्येति ग० ङ० ।
(५] चोभौ ह्यनागोऽसीतीति क० ग० घ० च० ।
(६) कतरेति परेयं स्विति क० घ० च०, सूक्तेन कतरेति त्वि ङ० ।
(७) समिद्धो ह्याग्नियोऽग्ने च नयाग्नये इति ख० ङ० पुस्तकान्तरञ्च ।
(८) परेति ख० ङ० पुस्तकान्तरञ्च ।

(क) ऋ० १, ३४, १ । (ख) ऋ० १, ६१, ७ । (ग) ऋ० १, ९०, १ ।

उक्तेषु[१] कर्मस्वैन्द्रेषु भीतावाशु विवेश ह[२] ॥६५॥
इदमन्तरमित्युक्त्वा ताविन्द्रस्तु न्यवर्हयत् ।
निहत्य तौ त्वत्समदस्त्वृषिं[३] शक्रोऽभ्यभाषत ॥६६॥
यथेष्टं मामृषे[४] पश्य प्रियस्त्व[५] ह्यागतोऽसि[६] मे ।
वरं गृहाण मत्तस्त्वमक्षय[७] चास्तु ते तपः ॥६७॥
प्रश्न[८]स्तु प्रत्युवाचर्षिरस्माकं वदतां वर[९] ।
तनूनामस्तु चारिष्टिर्वाक् चास्तु हृदयङ्गमा ॥६८॥
सुवीरा[क]रयिमन्त[ख]श्च वयन्त्वामिन्द्र धीमहि[१०] ।
इन्द्र[११]त्वाञ्च विजानीमो वयं जन्मनि[१२] जन्मनि ॥६९॥

त्वद्गत(१)श्चैव मे भावो मापगास्त्वद्रथीतरः(२)।
निरुक्तं तदिदं चार्षमिन्द्रश्चैवान्वृचान्वया ॥७०॥
वव्रे वरमिदं सर्व्वं तदाकर्ण्य शचीपतिः(३)।
तथेत्युक्त्वा तुराषाट् तां(४) पाणौ जग्राह दक्षिणे ॥७१॥
ऋषिश्चास्य सखित्वेन पाणिना पाणिमस्पृशत्।
सहितौ जग्मतुश्चैवं महेन्द्रसदनं(५) प्रति ॥७२॥
तत्रैनमार्हयत्प्रीत्या स्वयमेव पुरन्दरः।
कर्म्मणा विधिदृष्टेन तमृषिश्चाभ्यपूजयत्(६) ॥७३॥
सखित्वाच्च पुनस्त्वेन(७)मुवाच हरिवाहनः।
गृणन्माद्यसे यस्मात्त्वमस्मानृषिसत्तम ॥७४॥
तस्माद्गृत्समदो नाम शौनहोत्रो(८) भविष्यसि।
ततो द्वादशभिः सूक्तैस्तुष्टावेन्द्रं शुधी(९)(क)त्वृषिः ॥७५॥

---

(१) त्वा तत इति क० घ० च०।
(२) माप्रागाच्च रथीतरः इति ङ० पुस्तकान्तरञ्च।
(३) निरुक्तं तदिदं चार्षमित्यादि तदाकर्ण्य शचीपतिरित्यन्तपाठः, क० ग० घ० च० चिह्नितपुस्तकेषु, नोपलभ्यते।
(४) त्वामित्यत्र तमितिपाठः शुद्धः। रथाङ्गन्विति ख० ङ० पुस्तकान्तरञ्च।
(५) महेन्द्रभवनमिति ख० ङ० पुस्तकान्तरञ्च।
(६) चाभ्यपूजयदिति क०। तमृषिं चाभ्यपूजयदिति ख० ग० घ० च०।
(७) एवमिति पुस्तकान्तरम्।
(८) शौनकोऽत्र इति ख०।
(९) इन्द्रशुधीत्यृषिरिति क० पुस्तकान्तरञ्च।

---

(क) ऋ० २, २५, १९।

उक्तेषु[१] कर्मस्विन्द्रेषु भीतावास्तां विवेश ह[२] ॥६५॥
इदमन्तरमित्युक्त्वा ताविन्द्रस्तु न्यवर्हयत् ।
निहत्य तौ गृत्समदमृषिं[३] शक्रोऽभ्यभाषत ॥६६॥
यथेष्टं मास[४]खे पश्य प्रियस्त्वं[५] ह्यागतोऽसि[६] मे ।
वरं गृहाण सत्तस्त्वमचर्यं[७] चास्तु ते तपः ॥६७॥
प्रज्ञ[८]स्त्वं मत्युवाचर्षिरस्माकं वदतां वरः[९] ।
तनूनामस्तु चारिष्टिर्वाक्चास्तु हृदयङ्गमा ॥६८॥
सुवीरा[क]रयिमन्त[ख]श्च वयन्त्वामिन्द्र धीमहि[१०] ।
इन्द्र[११]त्वाञ्च विजानीमो वयं जन्मनि[१२] जन्मनि ॥६९॥

---

(१) कीर्त्तेष्विति क० घ० च० ।
(२) भीतौ सुषुपतुस्तदेति ख० ङ० पुस्तकान्तरञ्च ।
(३) इदमिति ङ० पुस्तकान्तरञ्च ।
(४) मांसमिति पाठः सङ्गतः ।
(५) मास खे पश्य प्रियस्त्वमिति क० घ० च० । अथ, मांसं खे पश्य प्रियस्त्वमिति पाठो विशुद्धः ।
(६) प्रियत्वं चागतोऽसीति ङ० ।
(७) मत्तस्त्वाच्चर्यमिति क० घ० च० ।
(८) प्रज्ञः इति क० घ० च० ।
(९) वरेति क० ग० घ० च० ।
(१०) इन्द्र वामहे इति ख०, इन्द्रमीमहे इति ङ० ।
(११) इन्द्रमिति ङ० ।
(१२) ह्यजनीति क० ग० घ० च० ।

---

(क) ऋ० ६, १३, ५ । (ख) ऋ० १०, ७४, १ ।

[1]घृतव्रता वैश्वदेवस्तथैन्द्रं परन्तु यत्[2]।
प्रचि क्रतुमिति त्वामिन्द्राग्नी सह सूक्ते ॥८०॥

सरस्वति त्वमित्यग्निवद्ध्वे मध्यमा तु वाक्[3]।
बृहस्पतिन्तु यो नस्तु[4] उत्तमा मरुतस्तुतिः[5] ॥८१॥

अस्माकं वैश्वदेवन्तु सूक्तादावुत्तमस्य तु[6]।
द्यावापृथिव्योर्द्वे त्वाष्ट्रौ[7] तथैवैन्द्रौ[8] परे ततः ॥८२॥

द्वे द्वे राकासिनीवाल्योः षड्लैङ्ग्योऽग्न्यास्तथान्तया[9]।
[10]रौद्रं मारुतन्तु परं[11]मा ते धारावरा इति ॥८३॥

(१) वायवीयो म इत्याद्या दुःस्वप्नापप्रवासिनीः। श्लोकार्द्धमेतत् ग० चिह्नितपुस्तके घृतव्रतेति श्लोकात् पूर्व्वमधिकं पठितं।

(२) परं यत इति ख०, परं तत इति ङ०।

(३) माध्यमानुवागिति ख०।

(४) बृहस्पते स्तुतिर्यो मा इति ख०, यो न स्त इति ग०।

(५) बृहस्पते स्तुतिर्यो उ त्तम्बरुस्मवता स्तुतिः इति ङ०।

(६) अस्माकं वैश्वदेव स्यात् सूक्तादावस्य चास्य ऋगिति ग०, स्यादद्या ऋक् चान्तिमास्य त्विति ङ० पुस्तकान्तरञ्च।

(७) ऋग्द्यावापृथिवीत्यृचेति क० घ० च०, द्यावापृथिव्योस्त्वाष्ट्रौ वै इति ख०। वै इत्यत्र वा इति ग०।

(८) वाच चैन्द्रा इति ग०, चैन्द्रौ वैवौ इति ङ० पुस्तकान्तरञ्च।

(९) तथान्त्ययेति ग०, षड्भुग्वाधन्तया स्तुताः इति क० घ० च०।

(१०) ख० ङ० चिह्नितपुस्तकयोः पुस्तकान्तरे च रौद्रमित्यस्मात् पूर्व्वं, तत्पूर्व्वे द्वे ऋचौ कुह्वाः कुह्वमहमिति सूक्ते। तदुत्तरे द्वे अनुमतेरनुमो न्विति ते सूक्ते। धातुस्वतस्त्वचादौ धाता दधाति नो रयिम्(क)। इत्यधिकं पठितं।

(११) रौद्रं स्यात् परमावतमिति पुस्तकान्तरम्।

(क) ऋ० १, १, ३।

इदर्थं संस्तुवन्नेव तत्र स ब्रह्मणस्पतिम् ।
बृहस्पतिं तु तुष्टाव दृष्टलिङ्गाभिरेव च[१] ॥७६॥
स तमप्यभितुष्टाव[२] चतुर्भिरत[३] उत्तरैः ।
गणानां विश्वमित्यस्यां[४] सहेन्द्रब्रह्मणस्पती ॥७७॥
बृहस्पतिं प्रसङ्गाद्वा[५] ब्रह्मणस्पतिमेव च[६] ।
तुष्टाव कर्मणैकेन प्रभावस्यान्तरन्तयोः[७] ॥७८॥
मित्रावरुणदत्तांयतु विजात[क]भगार्यमणाम्[८] ।
आदित्यानामिमाः [९]सूक्तमिदं वारुणमुच्यते[१०] ॥७९॥

(१) बृहस्पतिस्तु तुष्टाव दृष्टिलिङ्गस्तवैः सहेति ख०, दृष्टलिङ्गस्तवैः सहेति घ० ।

(२) अभ्यभितुष्टावेति क० ख० ग० पुस्तकान्तरञ्च ।

(३) चतुर्भिरिति उत्तरैरिति ग०, चतुर्भिरित उत्तरैरिति ङ०, चतुर्भिरेत उत्तरैरिति पुस्तकान्तरम् ।

(४) अस्या इति ङ०, विश्वामित्रस्येति ख० ।

(५) प्रसङ्गत्वादिति ख० घ० ।

(६) ब्रह्मणस्पतिमेव वेति ङ० ।

(७) द्वयोरिति ग० । श्लोकार्द्धमेतत् ख० घ० चिह्नितपुस्तकयोर्नोपलभ्यते ।

(८) सुविज्ञातभगार्यमामिति ख० ।

(९) इमाप्युक्तमिति ख० । इमाः इत्यत्र इदमिति पाठो विशुद्धः ।

(१०) वरुणमिति ग० ।

(क) ऋ० १, १३१, ७ ।

ऋषेर्जिगमिषोरार्गा ववाशा[क]स्राय[१] दक्षिणाम् ।
स तमार्षेण सम्प्रेक्ष्य चक्षुषा पक्षिरूपिणम् ।
पराभ्याममितुष्टाव सूक्ताभ्यान्तु कनिक्रदत्[ख] ॥८८॥

प्रशास्य गायंस्तपसाऽभ्यगच्छ[२]-
द्ब्रह्मर्षितामेकशतञ्च पुत्रान् ।
स गाधिपुत्रस्तु जगाद सूक्तं
सोमस्य मेत्याग्नेयं यत्परञ्च[३] ॥८९॥
वैश्वानरीयेति[४] समित्समिदा
प्रोदे आग्नेये[५] उत्तरे त्वत्र[६] सूक्ते ।
द्यावापृथिव्यौ तु निपातभाजा[७]
वापोऽथ देवाः पितरश्च मित्रः[८] ॥९०॥
आग्नेयेषु दृश्यन्ते सुतास्तु[९]-

(१) ववासे प्रतीति ख० ङ० पुस्तकान्तरञ्च ।
(२) स्थ्यगच्छन्निति ङ० पुस्तकान्तरञ्च ।
(३) नेत्यमये तत्परे चेति ख० ङ० पुस्तकान्तरञ्च ।
(४) वैश्वानरीयेऽथेति ख० ङ० पुस्तकान्तरञ्च ।
(५) प्रियो द्वे चेति ख० ङ० पुस्तकान्तरञ्च ।
(६) त्वस्येति ख० ङ० पुस्तकान्तरञ्च । उत्तरेत्यथेति ग० ।
(७) द्यावा पृथिव्या उभसो निपाता इति ख० ग० ङ० पुस्तकान्तरञ्च ।
(८) आपोऽथ देवा पितरोऽथ मित्र इति ख० ग० ङ० पुस्तकान्तरञ्च।
(९) क० घ० च० चिह्नितपुस्तकेषु सुतास्तु इत्यत्र तु इति पाठो न दृश्यते ।

(क) ऋ० ३, ३, २ । (ख) ऋ० १, १२९, १ ।

वामदेवो मृगान् दृष्ट्वा विभ्यत्तेभ्य ऋषिः स्वयम्[१]।
[२]अपान्नपादुपेत्यत्र स्तुतः सूक्ते ततः[३] परे ॥८४॥
तुभ्यमित्यार्भवे[४] सूक्ते सावित्रादाश्विनम्परम्[५]।
सोमः पूषादितिश्चैव सोमापूष्णोन्त्यया स्तुताः ॥८५॥
वायव्ये[६] वैन्द्रवायव्या अन्त्यास्तु प्रउगा[क]स्तृचाः[७]।
प्रत्यृक् स्तौति हविर्धाने अग्निस्तत्र निपातभाक् ॥८६॥
द्यावापृथिव्यौ द्यावेति हविर्धाने ततः परे।
[८]स्तुतिन्तु[९] पुनरेवेच्छन्निन्द्रो भूत्वा कपिञ्जलः ॥८७॥

---

(१) वामवत्तु मृगान् स्तौत्यध्वनि निप्रस्थितास्तु हि। इति क० घ० च०, मृगं दृष्ट्वेति ग०।

(२) ग० ङ० चिह्नितपुस्तकयोः पुस्तकान्तरे च अपान्नपादित्यस्मात् पूर्वं स्तुहि श्रुतमिति तस्या यदमस्तौत्प्रसादयन्नित्यधिकं पठितं।

(३) तव इति पुस्तकान्तरम्।

(४) इत्यार्तवे इति ख० ङ० पुस्तकान्तरञ्च।

(५) श्लोकार्द्धमेतत् ग० चिह्नित पुस्तके नोपलभ्यते।

(६) वायव्ये इति ग०।

(७) वायव्ये चैन्द्रवायवौ पश्चाच प्रउगास्तृचा इति क० ग० घ० च०।

(८) ङ० चिह्नितपुस्तके पुस्तकान्तरे च स्तुतिमिति श्लोकार्द्धात् प्राक्, वायव्येयो म इत्येषा दुःस्वप्नाघ्यमपाघ्निनीति श्लोकार्द्धमधिकं दृश्यते।

(९) स्तुवन्निति ख०।

---

(क) ऋ० १०, १३०, ३।

एते काण्व्यावृचौ यौष्यौ छन्दन्ति नेति पञ्च च[1] ॥८४॥
शेषा वज्रभ्यो यूपेभ्यो[2] वैश्वदेवी तृगष्टमी[3] ।
अंस्या[क]न्या प्रशस्विनी योक्ता[4] पञ्चमैन्द्राग्न[5]मुच्यते ॥८५॥
वैश्वदेव्यग्निमुषसं[6] दधिक्राव्णेति[7] चैतया ।
आग्नेन्द्री त्वग्न इन्द्रेति परा[8] वैश्वानरस्तृचः ॥८६॥
प्रयन्तु मारुता[9]स्तान्या शतधारस्तुरस्तवः ।
प्र वो वाजा ऋतू[10] स्तौति ऋत्विजः स्तौति[11]मन्यतः ॥८७॥
पुरीष्यास[12] [ख]इति त्वष्टान्धिष्ण्यानग्नीन् प्रशंसति ।

---

(१) एते काण्वात्वृचौ चोभौ यौष्यौ छन्दन्ति पञ्च चेति ख० ।
(२) शेषेभ्यो वज्रयूपेभ्य इति ग० ।
(३) वैश्वदेवी ऋगष्टमीति क०, वैश्वदेवीत्यृगष्टमीति पुस्तकान्तरम् ।
(४) स्यान्ता प्रशस्वना योक्तेति घ० ।
(५) स्यान्ताः प्रशस्वनाः योक्तेन्द्राग्नी ऐन्द्राग्नमिति ङ० पुस्तकान्तरञ्च ।
(६) अग्निमुषसं वैश्वदेवीति क० ख० ग० घ० च० ।
(७) दधिक्रामितीति क० ग० घ० च० ।
(८) आग्नेन्द्री त्वम इन्द्रश्च परेति ङ० पुस्तकान्तरञ्च ।
(९) प्रयन्तमारुतः इति ख० ङ० पुस्तकान्तरञ्च ।
(१०) ऋतूनितिपाठः समीचीनः ।
(११) स्तौति ऋत्विजश्चैवेति ख० ङ० पुस्तकान्तरञ्च ।
(१२) पुरीष्यास इति ग० ।

---

(क) ऋ० १, १९१, ७ । (ख) ऋ० ३, २२, ४ ।

वैश्वानरो वरुणो जातवेदाः।
स्तूयेतैका यत्र यथास्तुतिर्वा[1]
नैपात्यांस्तां[2] चोपमार्थाद्य[3] विद्यात् ॥८१॥
राजर्षयो गृत्समदा वसिष्ठा
भरद्वाजाः कुशिको गौतमाद्य।
विश्वेऽद्भिनावङ्गिरसोऽथ योऽदिति-
र्भौजाः कण्वो[4] भृगवो रोदसी दिशः ॥८२॥
सावित्रसौम्याश्विन[5] मारुतेषु
ऐन्द्राग्नेये रौद्रसौर्य्योपसेषु[6]।
आदावन्ते सूक्तमध्ये स्तुताम्[7]
न व्याप्नन्ति देवताः सूक्तभाजः[8] ॥८३॥
अग्नेः प्रमदमोऽध्याय ऊर्द्ध्वं अनुष्ठ जातवे[क]।

(१) यक्नो यत्र तथान्यस्तुतिर्वेति ख० ग० पुस्तकान्तरञ्च।
(२) निपातवर्गा इति क० ग० ख० घ०।
(३) उपमार्थाचेति पाठः साधुः।
(४) कण्वा इति ख० ग० पुस्तकान्तरञ्च।
(५) सौम्याग्निवेति ख० ग० पुस्तकान्तरञ्च।
(६) सौम्यैन्द्रवैश्वमिति ख० ग० पुस्तकान्तरञ्च, वैश्वदेवेष्विति घ०।
(७) स्मृताभ्यां इति ग० पुस्तकान्तरञ्च।
(८) प्राप्ते देवतां सूक्तभाक्त्विनीमिति पुस्तकान्तरम्, सूक्तभाजा इति ख०, सूक्तभाजिनामिति ग०।

(क) ऋ० ६ म० १।

एते काण्व्याष्टचौ यौप्यौ आञ्जन्ति लेति पञ्च च[१] ॥८४॥
शेषा बह्नभ्यो यूपेभ्यो[२] वैश्वदेवी तृगष्टमी[३] ।
अंसा[क]न्या प्रश्विनी योक्ता[४] षष्ठमैन्द्राग्न[५]मुच्यते ॥८५॥
वैश्वदेव्यग्निमुपसं[६] दधिकाव्णेति[७] चैतया ।
आग्नेन्द्री त्वम इन्द्रेति परा[८] वैश्वानरस्तृचः ॥८६॥
प्रयन्तु मारुता[९]श्चान्या शतधारस्तृचस्तवः ।
प्र वो वाजा ऋतून्[१०] स्तौति ऋत्विजः स्तौति[११]मन्यतः ॥८७॥
पुरीष्यास[१२] [ख]इति त्वष्टान्धिष्ण्यानग्नीन् प्रशंसति ।

---

(१) एते काण्व्यास्त्वचौ चोभौ यौप्यौ आञ्जन्ति पञ्च चेति ख० ।
(२) शेषेभ्यो बह्वयूपेभ्य इति ग० ।
(३) वैश्वदेवी ऋगष्टमीति क०, वैश्वदेवीत्यृगष्टमीति पुस्तकान्तरम् ।
(४) स्याप्ता प्रमश्वना योक्तेति घ० ।
(५) स्यान्ताः प्रमश्वनाः योक्तोऽग्नौ ऐन्द्राग्नमिति ङ० पुस्तकान्तरञ्च ।
(६) अग्निमुपसं वैश्वदेवीति क० ख० ग० घ० च० ।
(७) दधिकामितीति क० ग० घ० च० ।
(८) अयोग्नी त्वम इन्द्रस्य परेति ङ० पुस्तकान्तरञ्च ।
(९) प्रयन्तमारुतः इति ख० ङ० पुस्तकान्तरञ्च ।
(१०) ऋतूनितिपाठः समीचीनः ।
(११) स्तौति ऋत्विजश्चैवेति ख० ङ० पुस्तकान्तरञ्च ।
(१२) पुरीष्यास इति ग० ।

---

(क) ऋ० १, १८९, ७ । (ख) ऋ० ३, २२, [illegible] ।

ज्ञेया[१]श्चैव तु होतारस्ते दैव्याश्चैव तत्र तु[२] ॥९८॥
त्रयोविंशतिरैन्द्राग्नी इच्छन्तीति पराश्रतः।
सूक्ते प्रेति तु नद्यश्च विश्वामित्रं समूदिरे[३] ॥९९॥
[४]पुरोहितः सन्निच्छार्थं सुदासः सोऽहरद्धनम्।
विपाट्छुतुद्र्योः सम्भेदं शमित्येते उवाच ह ॥१००॥
प्रवादास्तत्र दृश्यन्ते द्विवदङ्गवदेकवत्।
अच्छेत्यर्द्धर्चे पच्छो वा नदीष्वप्येकवन्ति ते ॥१०१॥
आद्ये द्व्यृचे द्विवत्सार्द्धे विश्वामित्रवचःश्रुतेः।
एनाभिर्ऋग्भिर्वा नद्य ऋषिं बहुवदूचिरे ॥१०२॥
पञ्चदृश्यो[५]श्चतुर्थ्याश्च दृशम्याश्चेतरा ऋषेः।
सप्तम्यामृचि षष्ठ्याश्च यौ देवौ[६] परिकीर्तितौ ॥१०३॥
निपातिनो तु तौ ज्ञेयौ लैन्द्रापार्वत्युगुत्तमे[७]।
करोति पुत्रिकां नारी[८] यथा दुहितरन्तथा ॥१०४॥

---

(१) यूपा इति ख०।
(२) तत्र हेति ख० ङ०।
(३) विश्वामित्र समूचिरे इति ख० ग० पुस्तकान्तरे, स संवदन्निति क० घ० च०।
(४) पुरोहित इत्यादि श्लोकत्रयं क० घ० ङ० चिह्नितपुस्तकेषु नोपलभ्यते।
(५) षड्दृश्योरिति पाठः साधुः।
(६) यौदकौ इति ग०।
(७) पार्वत्यमंत्रमिति ङ० पुस्तकान्तरे।
(८) नामेति ख० ङ० पुस्तकान्तरे।

तस्यां सिञ्चति रेतो वा(१) तच्छावदिति कीर्तितम्।
रिक्थस्य दुहितुर्दानं नेत्यृचि प्रतिषिध्यते(२) ॥१०५॥
तस्यास्यैव(३) यवीयांसं भ्रातरं ज्येष्ठवत्सुतम्।
सुदासश्च महायज्ञे दक्षिणा गाधिसूनवे(४) ॥१०६॥
निगृहीतं बलाच्चेतः(५) सोऽवसीदद्विचेतनः।
तस्मै(६) ब्राह्मीन्तु सौरीं वा नाम्ना वाचं ससर्परीम् ॥१०७॥
सूर्यक्षयादिहागत्य ददुस्ते(७) जमदग्नयः।
कुशिकानां ततः सा वागमतिन्तामपाहनत् ॥१०८॥
उपेत्य वाच्यां(८) कुशिकान् विश्वामित्रो बुबोध यत्।
लब्ध्वा वाचं च हृष्टात्मा(९) तानृषीन् प्रत्यपूजयत्(१०) ॥१०९॥
ससर्परीरिति द्वाभ्यामृग्भ्यां वाचं स्तुवन् स्वयम्।
स्थिरावित्यनघो(क)ऽङ्गान्यनडुह(११)श्च स्वद्दान् प्रजन् ॥११०॥

---

(१) रेतो धा इति ख० पुस्तकान्तरञ्च।
(२) प्रतिषेधतीति ख० ङ० पुस्तकान्तरञ्च।
(३) तस्यास्याश्चेति ख० ङ० पुस्तकान्तरञ्च।
(४) प्रक्रिना गाधिसूनवे इति क० ग० घ० च०।
(५) मद्वीत्या बद्धलाच्चेतः इति ख० ङ० पुस्तकान्तरञ्च।
(६) तस्येति क० घ०।
(७) ता ददुरिति ख० ङ० पुस्तकान्तरञ्च। वागयेयम चाहृयेति क० ग० घ० च०।
(८) उपेति वाच्यां कुशिकानिति क० घ०, उपेत्य वाचं कुशिकानिति ङ०।
(९) प्रतिष्ठात्मेति ख० ङ० पुस्तकान्तरञ्च।
(१०) अभ्यचेतयदिति ङ० पुस्तकान्तरञ्च।
(११) इत्यनघाङ्गान्यनडुहीभि [illegible] इति घ०।

---

(क) ऋ० ३, ५०, ५०।

[1]अनसोऽङ्गानि चोत्थाप्य अनड्वाहौ गृहात्मजौ।
ततश्च स्वशरीरञ्च गृहान् स स्वयमाप ह ॥१११॥
रथञ्च स्वशरीरेण गृहान् गच्छन् परादटे।
परास्तस्तो यास्त्वत्र वसिष्ठद्वेषिणीर्विदुः[2] ॥११२॥
विश्वामित्रेण याः[3] प्रोक्ता अभिशापा इति स्मृताः।
द्विषद्द्वेषास्तु ताः प्रोक्ता विद्याश्चैवाभिचारिकाः[4] ॥११३॥
वसिष्ठास्ता[5]न शृण्वन्ति तदाचार्य्यकसम्मतम्।
कीर्त्तनाच्छ्रवणाद्वापि महान् दोषः प्रजायते[6] ॥११४॥
शतधा भिद्यते मूर्द्धा कीर्त्तितेन श्रुतेन वा।
तेषां बालाः प्रमीयन्ते तस्मात्तास्तु न कीर्त्तयेत् ॥११५॥
विश्वांश्च देवां[7]स्तुष्टाव चतुर्भिरिमभित्यृषिः।
अस्तौदिश्वात्मना सर्व्वान् मन्यमानः परं पदम् ॥११६॥

---

(१) अनस इत्यादिसार्द्धश्लोकः क० ग० घ० चिह्नितपुस्तकेषु नेष्यते। तेषु अस्मिन् स्थले, तन्वञ्च स्वा शरीरञ्च गृहानाच्छन् परीददे इति पाठोऽस्ति।

(२) वसिष्ठद्वेषिण्यः स्मृताः इति क० ख० ग० घ०।

(३) त्विति क० ख० ग० घ० च०।

(४) विद्वेषिण्यः स्मृता विद्यादभिचारेषु युज्यते। इति क० ग० घ० च०।

(५) त्विति ख० पुस्तकान्तरञ्च, ते इति ङ०।

(६) श्लोकार्द्धमेतत् क० घ० चिह्नितपुस्तकयोर्न दृश्यते।

(७) विश्वान् देवांश्चेति ङ० पुस्तकान्तरञ्च।

(१)देवानामसुरत्वं तदेकं महदितीरयन् ।
अश्विनौ मित्र आर्भवो(२) धेनुर्मित्र इहेह वः ॥११७॥
(३)वैश्वदेवीति विज्ञेया मैत्री मित्राय पञ्च तु ।
ऐन्द्रार्भवस्तृचस्त्वार्भवे सूक्तः स उत्तमः(४) ॥११८॥
(५)पूर्वे शुचे निपातोऽत्र उषो वाजेन पञ्चमात् ।
उषस्यादुत्तरे षड्भिः स्तुता षड्देवता तृचैः(६) ॥११९॥
ऐन्द्रावरुणः प्रथमो बार्हस्पत्यस्ततः परः(७) ।
पौष्णसावित्रसौम्याश्च मैत्रावरुण उत्तमः(८) ॥१२०॥
तुष्टाव भ्रमरश्मिय(९) तेन देवा धृता बुधौ ।
देवर्षिपितृपूजार्थं च चम्मादपपद्युनः(१०) ॥१२१॥

यस्य वै श्येनरूपेण ग्रहर्[1]द्दुवहा मधु।
सोऽग्निस्तु पञ्चदशभिरिन्द्रं षोडशभिः परैः ॥१२२॥
ऋषिस्त्वामिति तुष्टाव सूक्तैरेतैस्तु[2] गौतमः।
स भ्रातरमिति त्वास्[3] तिस्रष्वग्निर्निपातभाक् ॥१२३॥
वरुणेनाभिसंस्तौति प्राङ्[4]रन्ये निपातितम्।
लिङ्गोक्तदेवते सूक्ते एके[5] प्रत्यग्निरेव तु[6] ॥१२४॥
ऋषिर्बोधदिति द्वाभ्यां स्तौति सोमकमेव तु[7]।
तथैव पायुर्याय[8] पराभ्यामश्विनौ स्तुतौ ॥१२५॥
अश्वसानुजनिष्येऽहं[9] नुवाणं गर्भ एव[10] तम्[11]।
अन्वगात्त्वदितिः[12] पुत्रमिन्द्रमात्महितैषिणी ॥१२६॥

---

(१) यस्य च श्येनरूपेण चाहरदिति ख० ङ० पुस्तकान्तरञ्च।
(२) एति त्विति ग० घ०, एति चेति ङ० पुस्तकान्तरञ्च।
(३) त्वाश्चिति ङ०।
(४) अभिसंस्तौत्या प्राङ्गरिति क० ग० घ० च०।
(५) लिङ्गोक्तदेवत सूक्तमेते इति क० घ०।
(६) लिङ्गोक्तदेवते सूक्ते एके प्रत्यग्निरिवमे, इति ङ०।
(७) सोमकभूपतिमिति ङ० पुस्तकान्तरञ्च।
(८) पायुर्योऽर्थायेति ख० ङ० पुस्तकान्तरञ्च।
(९) अनिष्यामेति क० ख० च०, जनिष्याम इति ग०।
(१०) गर्भेभेवेति क० ग० घ० च०।
(११) त्विति क० ख० ग० घ० च०।
(१२) अन्वयाददितिरिति ङ० पुस्तकान्तरञ्च।

स जातमात्रो युद्धाय ऋषिमेवाजुहाव तं[1]।
योधयन्[2]वामदेवस्तं कृत्वात्मनि वलं तथा ॥१२७॥
दिनानि दश रात्रीश्च[3] विजिग्ये चैनमोजसा।
स तद्ध दश[4]मित्यस्यां विक्रोशन्नृषिसंसदि ॥१२८॥
स्वयमेवाभितुष्टाव[5] नकि[क]रिन्द्रेति[6] गौतमः।
किमादुतासीति चास्यां[7] मन्युं मघे[8] पराणुदत् ॥१२९॥
अथास्य रूपवीर्याणि धैर्यकार्याणि तान्यपि:[9]।
विविधानि च कर्माणि प्रशंसादितये तथा ॥१३०॥

---

(१) स जातमात्रं युद्धायेति क० ख० ग० घ० च०।
(२) योधयेदिति क० ख० घ० च०।
(३) रात्र्यश्चेति क० ग० घ० च०।
(४) सतद्ध इत्यमिति ग०।
(५) स्वयं तेनाभितुष्टावेति ग०, स्वयमेवाभितुष्टावेति ङ० पुस्तकान्तरञ्च।
(६) इन्द्रेत्येति ङ०।
(७) किमादुतासीदित्यस्यामिति ङ० पुस्तकान्तरञ्च।
(८) मन्युमर्धे इति क० ग० घ० च०, मन्युमध्ये इति ख०।
(९) धैर्याण्याणि चारित्र्यिति क०, धैर्याण्यद्याणि चारित्र्यिति घ० च०, तान्यपिरिति ङ०।

---

(क) ऋ० १, २७, ८।

अयमित्यष वै सूक्ते(१) द्वचे स्तुतिर्ह्यतस्य हि(२)।
प्रसुपविभ्यो नवभिर्ऋग्भिः श्येनस्य(क) संस्तवः ॥१२१॥
पराभिस्त्वेति पञ्चर्चे सोमेनेन्द्रः स्तुत(३) सह ।
सोमप्रधाना(४)मेतान्तु क्रोष्टुकि(५)र्मन्यते स्तुतिं ॥१२२॥
दिवश्चिदिति चानेन द्वचेनेन्द्रेण संस्तुत.(६) ।
उषस मध्यमा मेने त्वाचार्य्य(७) शाकटायनः ॥१२३॥
वाममित्यृक्स्तुतायात्र(८) भगः पूषेति चार्य्यमा ।
करूळती(ख)ति पूषोक्तोऽदन्तकः स इति श्रुतेः ॥१२४॥
अस्माकमुत्तम सूर्य्यं स्तौतीत्याहाश्वलायन(९)।

---

(१) अहमित्यात्मसंस्तव इति ख० ङ०, अहमित्यात्मसंस्ताव' इति ग० ।
(२) द्वचे स्तुतिविरस्य चौति ख०, द्वचे स्तुतिरिवास्य चौति ङ० पुस्तकान्तरञ्च ।
(३) पराभिस्त्वेव पञ्चर्चे सोमेन्द्र संस्तुत इति क० घ०, सोमेन्द्रौ च स्तुत इति ग० ।
(४) सोमप्रधानमिति क० ख० ग० घ० च० ।
(५) क्रोष्टुक इति क० घ० च० ।
(६) चैतेन ते द्वचे नेन्द्रसंस्तुतेति क० घ० च०, इन्द्रसंस्तुवामिति ग० ।
(७) मेन आचार्य्य इति ख० ङ० पुस्तकान्तरञ्च ।
(८) वाममित्यृचि संस्तुतेति ख० ङ० पुस्तकान्तरञ्च ।
(९) करूळतीत्यादि स्तौतीत्याहाश्वलायन इत्यन्तपाठ क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।

---

(क) ऋ० १, ११८, ११ । (ख) ऋ० ४, ३२, २३ ।

इन्द्रस्य हरयो ह्यश्वा अग्नेरश्वस्तु[1] रोहितः ॥१२५॥
सूर्य्यस्य हरितश्चैव[2] वायोर्नियुत एव च।
रासभा रोहितो[3]ऽश्विभ्यामजाः[4]पूष्णश्च[5]वाजिनः॥१२६॥
पृषतो[6]ऽश्वास्तु मरुतां गावोऽरुण्यस्तथोषसः[7]।
सवितुर्वाजिनः श्यावा[8] विश्वरूपा बृहस्पतेः ॥१२७॥
सहैते देवताभिस्तु[9] स्तूयन्ते स्वन्यथो[10]ऽन्यथा।
आयुधं वाहनं चापि स्तुतौ यस्येह दृश्यते ॥१२८॥
तमेव तु स्तुतं विद्यात्तस्यात्मा बहुधा हि सः।
कनीनका[क]सूक्तशेषो हर्य्योः स्तुति[11]रिहोच्यते।
चत्वार्य्यतश्च विज्ञेयान्यप्रगृह्याणि[12] विद्रधे.[ख] ॥१२९॥

इति बृहद्देवतायां चतुर्थोऽध्यायः।

---

(१) अश्वास्त्विति क॰ ख॰ घ॰ ङ॰ च॰।
(२) प्रोक्ता इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(३) रासभो मोहितः इति ख॰ङ॰पुस्तकान्तरञ्च, रासभौ सहितः इति ग॰।
(४) माजाः इति क॰ घ॰ च॰।
(५) पूष्णस्त्विति ख॰ ङ॰ पुस्तकान्तरञ्च।
(६) एषत्य॰ इति ङ॰ पुस्तकान्तरञ्च।
(७) तथोषसामिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(८) श्यामा इति क॰ घ॰ च॰।
(९) चेति ख॰ ङ॰ पुस्तकान्तरञ्च।
(१०) स्तूयन्तेऽप्यतेऽन्यथेति क॰ घ॰ च॰, स्तूयन्तेऽप्यल्पशोऽन्यथेति ग॰।
(११) धर्मस्तुतिरिति क॰ घ॰ च॰, स्तनयोऽथर्यस्तुतिरिति ग॰।
(१२) चत्वारि परमाणियान्याप्रगृह्याणीति ख॰ ङ॰ पुस्तकान्तरञ्च।

---

(क) ऋ॰ १, ७, २। (ख) ऋ॰ ४, १२, २३।

# अथ पञ्चमोऽध्यायः ।



प्रेति पञ्चार्भवं त्रीणि[१] दधिक्राणि पराण्यतः ।
ऋग्द्यावापृथिव्यौ स्तौति दधिक्रावुणां[क]मुखे तु या[२] ॥१॥
परोत्तैरमुतो वाग्भिर्नामभिस्तु स्तुतास्त्रयः ।
अग्निर्वायुश्च सूर्यश्च हंसः शुचिषदित्यृचा[३] ॥२॥
नियुक्ता सूर्यदेवत्या हंस इत्यैतरेयके[४] ।
द्वे त्वैन्द्रावरुणे सूक्ते[५] तत्र[६] त्रीण्याश्विनाग्निकः[७] ।
अग्रं वायो विद्दो[ग] त्वेपु [८]वायव्याः सप्त कीर्त्तिताः ॥३॥

(१) पञ्चार्भवाणीति ङ० ।
(२) दधिक्रावना स्तुतौ द्वि वामिति ख०, दधिक्राणां मुखे तु येति ग०, दधिक्राणामुतो (ख) द्वि वामिति ङ० ।
(३) इत्यृचेति क० ग० घ० च० ।
(४) श्लोकार्द्धमेवत् क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते ।
(५) द्वे इन्द्रावरुणे इन्द्रादिति ङ० ।
(६) ततः इति ग० ङ० पुस्तकान्तरञ्च ।
(७) त्वाश्विनाग्निकः इति क० ख० ग० घ० च० ।
(८) विद्दो मा त्वा इति ङ० पुस्तकान्तरञ्च ।

(क) ऋ० ४, ३९, २ । (ख) ऋ० १, २३, १५ ।
(ग) ऋ० ४, ४८, १ ।

नव चैन्द्रवायव्या ऐन्द्र्य[1]स्तिस्रः शतेन षट्[2] ।
इदं कथितदैवत्यं यत्तु सख्योत्तमो तृचः[3] ॥४॥
स्तुतिरिन्द्राबृहस्पत्योरष्टावेता ऋचः स्मृताः ।
बार्हस्पत्यन्तु तत्सूक्तमिदमित्यौषधे परे ।
पुरो धातुः कर्मसंज्ञा च इन्द्राजोष्यते[4] दृचे[5] ॥५॥
तस्मात्त्रिचौ द्वे तु को वैश्वदेवं[6]
मही द्यावा पृथिवीयं तत्परस्य[7] ।
क्षेत्रस्येति तिस्रः क्षेत्रपत्याः[8]
शुनं[क] वाहाः शुनदेवौ त्वृगुत्तमा[9] ॥६॥

---

(१) इन्द्रः इति क० ग० घ० च० ।
(२) शतेन षदिति ङ० ।
(३) इदमित्यौषधे परे इति क० घ० च०, यत्तं सख्योतिमो द्यृचः इति ग० ।
(४) स इन्द्राजोष्यते इति पुस्तकान्तरम् ।
(५) स्तुतिरिन्द्राबृहस्पत्योरिति श्लोकः क० घ० च० चिह्नितपुस्तकेषु नेष्यते ।
(६) तस्मात्त्रिचौ वैश्वदेवमिति ङ० ।
(७) परन्तु यदिति क० ग० घ० च० ।
(८) क्षेत्रस्य क्षेत्रपत्यप्रस्तुपस्त्विति क० घ०, क्षेत्रस्येति क्षेत्रपत्यस्तुपस्त्विति ग० ।
(९) शुनदेवत्युगुत्तरेति ख० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १, ११७, ५८ ।

वायुः शुनः सूर्य एवाच[१] सीरः[२]
शुनासीरौ[क] वायुसूर्यौ[३] वदन्ति ।
शुनासीरं यास्क इन्द्रन्तु मेने
सूर्येन्द्रौ तौ मन्यते शाकपूणिः ॥७॥
शुनासीरौ पञ्चम्यां तु स्तुतौ तौ
सीतायै षष्ठी लय सप्तमी च[४] ।
शुनं नः फालाः[ख] कृषिं स्तौति पादः[५]
शुनं कीनाशाः[ग] कृषिजीवान् मनुष्यान्[६] ॥८॥
शुनं पादे पर्जन्यं तृतीये[७]
चौनृषिः कृषिकामो[८]जगाद ।

(१) एवाचेत्यत्र त्वेवेति ख॰ ङ॰ पुस्तकान्तरयु ।
(२) सौर्य्यं इति क॰ घ॰ च॰ ।
(३) वायुसूर्य्यमिति क॰ घ॰ च॰ ।
(४) द्वे तु सीतायै षष्ठी सप्तमी चेति क॰ ग॰ घ॰ च॰ ।
(५) पादे इति ख॰ ।
(६) कृषिजीमनुष्यानिति क॰ घ॰ च॰ ।
(७) स्तुवः पादेऽथ पर्ज्जन्यस्तृतीये इति क॰ ग॰ घ॰ च॰ ।
(८) चन्त्यान् तृषिर्धर्म्मकामः इति क॰ घ॰ च॰, चन्त्यस्तृषिर्धनकाम इति ग॰ ।

(क) ऋ॰ ४, ५७, ५ । (ख) ऋ॰ ४, ५७, ८ । (ग) ऋ॰ ४, ५७, ८ ।

ऋषिं वा[1] स्तौति सर्व्वं हि सूक्तं
समुद्रादित्यग्नेर्मध्यमस्य ॥९॥
आदित्यं वा ब्राह्मणोक्तं प्रदिष्टं
ह्याग्नेय[2] यद्वाव्यसूक्तं[3] हि दृष्टं[4] ।
अपां स्तुतिं वा यदि वा घृतस्तुतिं
गवां स्तुतिं वा सूक्त[5]मेतद्वदन्ति ॥१०॥
स्वर्भानुदृष्ट सूर्यस्य अपघ्नत्य[6]तमोऽत्रयः ।
सप्तविंशतिभिः सूक्तैरबोधीत्यग्निमस्तुवन् ॥११॥
त्रैवृष्ण[क]स्त्रसदस्युश्च[ख] अश्वमेध इति त्रयः ।
स्तूयमानाः परोक्ष्याः स्युरग्निश्वेते[7]कचित् कचित्[8]॥१२॥
ऐक्ष्वाक[9] स्त्र्यरुणो राजा त्रैवृष्णो रथमास्थितः ।

(१) ऋषिवदिति क० ग० घ० ।
(२) आग्नेयमिति ख० ङ० पुस्तकान्तरञ्च ।
(३) वाय्वान्यसूक्तमिति क० ग० घ०, वा प्राज्यसूक्तमिति ग० ।
(४) प्रदिष्टमिति ख० ङ० पुस्तकान्तरञ्च ।
(५) गव्यमेके सौर्य्यमिति क० ग० घ० च० ।
(६) स्वर्भानुदिष्टसूर्य्यस्यापघ्नन् ये इति ख० ङ० पुस्तकान्तरञ्च ।
(७) अग्निश्चेते इति घ० ।
(८) त्रैवृष्णस्त्रसदस्युश्चेति श्लोक ख० ङ० चिह्नितपुस्तकयोर्न विद्यते ।
(९) ऐक्ष्वाकुरिति क० ग० घ० च० ।

(क) ऋ० ५, २७, १ । (ख) ऋ० ४, ३८, १ ।

सञ्जयपाशाश्वरथ्योश्च[1] वृशो जानः[2] पुरोहितः ॥१३॥

स ब्राह्मणकुमारस्य रथो गच्छञ्छिरोऽच्छिनत्।

एनःस्वित्यब्रवीच्चैव स राजैनं[3] पुरोहितं ॥१४॥

सोऽथर्वाङ्गिरसान्मन्त्रान्[4] दृष्ट्वा सञ्जीव्य तं शिशुं[5]।

क्रोधात्सन्त्यज्य राजानमन्यं देशं समाश्रितः ॥१५॥

हरोऽप्याग्नेर्नेनाशाच[6] तस्यापक्रमणादृषेः[7]।

अग्नौ प्रास्तानि हव्यानि[8] न ह्यपच्यत[9] कानिचित् ॥१६॥

ततः प्रव्यथितो राजा अभिगम्य प्रसाद्य च[10]।

आनीत्वा सहर्षं जानं[11] पुनरेव पुरोदधे ॥१७॥

स प्रसन्नो वृशोऽन्वैच्छद्धरमग्नेर्नृपक्षये।

---

(१) पास्य रथ्योश्चेति क॰ घ॰ च॰।

(२) वृशोजानः इति ख॰।

(३) राजा तमिति ख॰ ङ॰ पुस्तकान्तरञ्च।

(४) सोऽथ वार्षाणि सामानीति क॰ घ॰ च॰, सोऽथर्वा गिरिशान् मन्त्रानिति ख॰।

(५) सुतमिति ङ॰।

(६) धर्म्येति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।

(७) तस्याप्रक्रमणादृषेरिति क॰ ग॰ घ॰ च॰, गुरोरिति ङ॰ पुस्तकान्तरञ्च।

(८) प्राप्तानि पथ्यानीति क॰ घ॰ च॰, प्राप्तानि अन्नानीति ख॰, प्राप्तानि भाज्यानीति ङ॰।

(९) ह्यपच्यन्तेति पाठः साधुः। न ह्यपचतेति क॰ घ॰ च॰, ग्रवघ्नते इति ख॰, न श्रीयन्ते चेति ङ॰।

(१०) तमिति ग॰ ङ॰ पुस्तकान्तरञ्च।

(११) आनीय सहर्षं यानं इत्येव पाठो भवितुमर्हति।

अविन्दत पिशाचीं च[1] जायां तस्य च भूपतेः ॥१८॥
निषण्णः स तया सार्द्धं मासं द्वां कश्यपाश्रपि[2] ।
तामुपामन्त्रयाञ्चक्रे कसेतं त्वमिति त्वृचा[3] ॥१९॥
हरः[4] कुमाररूपेण वृषस्ता[5]मन्यभाषत ।
विद्योतिषेति चोक्तायां वह्नवाग्निरुदज्वलत् ॥२०॥
[6]पिशाचीमदहत्तां स यत्र चोपविवेश सा ।
एष एव परामृष्टो भाल्लवी ब्राह्मणो[7]ऽस्य च ॥२१॥
निदानसंज्ञके ग्रन्थे छन्दोगानामिति श्रुतिः[8] ।
भवेदेव परामर्शः सूक्तस्यास्य व्यपेक्षया[9] ॥२२॥
भवन्ति वाच्या मन्त्रा[10] हि विधिशब्देन[11] चोदिताः ।

---

(१) तामिति ग॰ ङ॰ पुस्तकान्तरञ्च ।
(२) कश्यपावपीति क॰ ख॰ घ॰ ।
(३) शुचेत्यृचेति ङ॰ ।
(४) नरः इति क॰ ख॰ घ॰ ।
(५) वृषंस्तामिति ख॰ ।
(६) ख॰ ङ॰ चिह्नितपुस्तकयो पुस्तकान्तरे च, पिशाचीमदहत्ता स इति श्लोकात् प्राक्, वहमान समाधान्त प्रकाशस्य प्रकाशयन्नित्य-धिकं श्लोकार्द्धं पठितम् ।
(७) भाल्लाभिब्राह्मण· इति ख॰, भाल्लविब्राह्मण· इति ङ॰ ।
(८) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते ।
(९) विवक्षयेति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(१०) वाच्यान्येषामिति क॰ ग॰ घ॰ च॰ ।
(११) विधिवृष्टेनेति क॰ ग॰ घ॰ च॰ ।

दृश्यन्ते ब्राह्मणे मन्त्रा एकदेशे प्रदर्शिताः ॥२३॥
जामदग्न्यो यथाप्रियः(१) स्तौतीयाश्(२)चैतरेयके ।
आप्रियः सुसमिद्धाय(३) पञ्चमं सूक्तमत्र तु(४) ॥२४॥
एतद्(५)वैश्वदेवी वा अन्या चैन्द्राग्न्युपोत्तमे ।
ऐन्द्राणि द्वादश त्रीणीत्युशना(६)यत्र(७) संस्तुतः ॥२५॥
उशनेति तु पादेन संहयद्वामनेन च(८) ।
इन्द्राकुत्सेति चैतस्यां कुत्सेनेन्द्रः स्तुतः सह ॥२६॥
यत्त्वा सूर्येति चात्रीणां पञ्चर्चे(९) कर्म कीर्त्यते ।
(१०)त्रैवृष्णस्त्र्यरुणो राजा अश्वमेध ऋणं च यः ॥२७॥
स्तूयमानाः प्रतीच्याः स्युरत्रिष्वेते क्वचित् क्वचित् ।
अनस्वन्तेति सूक्तेऽस्मिन्नाग्नेयेऽत्रिर्महर्षिः स्वयम् ॥२८॥
दानतुष्टः प्रशंसैतान्राजर्षीनिति केचन ।

---

(१) जामदग्न्यस्तथैवाज्यः इति क० घ० च०, यथाप्रीय इति ग० ।
(२) स्तोकीयाः इति ख० ग० ङ० पुस्तकान्तरञ्च ।
(३) आप्रि० सुसमिद्धायेति क० ग० घ० च० ।
(४) अत्रिष्विति ख० ङ० पुस्तकान्तरञ्च ।
(५) एदन्तगिति क० ग० घ० च०, ऐदन्तगिति ख० ।
(६) द्वादशान्यादीन्युशना इति ङ० पुस्तकान्तरञ्च ।
(७) यत्रेति क० ख० ग० घ० च० ।
(८) उशनेति च पादोऽयं संहयद्वा परस्य यः इति ख०, परस्य यः इत्यत्र परस्तय इति ङ० पुस्तकान्तरञ्च ।
(९) पञ्चर्चः इति क० घ० च० ।
(१०) त्रैवृष्णस्त्र्यरुणो राजेत्यादि सार्द्धाष्टश्लोकः क० ग० घ० च० चिह्नित-पुस्तकेषु न विद्यते ।

आभीरध्येषणाच्चैभ्यो अग्निं प्रति च दृश्यते ॥२८॥
अयुतञ्च गवां त्रीणि शतान्यथ च विंशतिः ।
सौवर्णशकटं गोभ्यां त्र्यरुणोऽदान्नृपोऽन्वये ॥३०॥
अश्वमेधशतं चोष्टांस्तमदृश्युर्धनं बहु ।
राज्ञः प्रति च तत्सूक्तं बभाष इति केचन ॥३१॥
आत्मा हितात्मने[१] दद्याद्यद्दौर्नृपतेर्त्रृषिः ।
अत्रेः सुतस्तृषिं बभ्रुमार्त्विज्याय चकार यः ॥३२॥
सहस्रदक्षिणे सोमे वव्रे तं सोऽप्ययाजयत् ।
ददौ तदौशनो राजा सहस्राणि शतानि च ॥३३॥
तस्मै चत्वारि चत्वारि महावीरञ्च काञ्चनम् ।
प्रवर्ग्येषु महावीराः सौवर्णास्तस्य चाभवन् ॥३४॥
प्रतिगृह्य ऋषिर्गच्छन् मध्यमेनाग्निना पथि ।
पृष्ट इन्द्रेण चाचख्यौ भद्रं चतसृभिश्च तत् ॥३५॥
कोनुवान् वैश्वदेवानि एकादश[२] पराण्यतः[३] ।
मारुतानि दृश इति इलाभीत्यृचि तु स्तुता[४] ॥३६॥
द्वितीययान्यया स्तुतः सविता शौनकोऽब्रवीत्[५] ।
उपेति वार्हस्पत्यस्तृचो यो मारुत्युगुत्तरा ॥३७॥

(१) आत्महितात्मने इति पाठः सङ्गतः ।
(२) कोनुवाश्च वैश्वदेवान्येकादशेति क० ।
(३) त्रिति ख० पुस्तकान्तरञ्च ।
(४) प्रेतीलाभीत्यृचि तु संस्तुतेति ग०, इलाभि न च्यवा स्तुतेति ख० ङ० पुस्तकान्तरञ्च ।
(५) श्लोकार्द्धमेतत् क० ग० घ०, च० चिह्नितपुस्तकेषु न दृश्यते ।

तमुष्टुही तु रौद्री स्यात्(१) प्रसुष्टुतिरिति त्वृचि।
इलस्पतिः शाकपूणिः पर्जन्याग्नी तु गालवः ॥३८॥
यास्कस्तु पूषणं मेने स्तुतमिन्द्रन्तु शौनकः ।
वैश्वानरं भागुरिस्तु मारुत्यौषसमाश्विनं(२) ॥३९॥
वायव्याध्वर्यवः सौमी इध्मेत्यैन्द्री परा तु या(३)।
(४)अग्निं धर्म्मं पराञ्चन्ति(५) अश्विनौ स्तौत्युगच्छ च ॥४०॥
प्रेति वां पूषणं या चेत्यर्द्धर्चेऽग्निरिहोच्यते ।
प्रथमेऽथ द्वितीये च स्तुता एति दिवौकसः ॥४१॥
आवाचं मध्यमां स्तौति ततोऽन्या तु बृहस्पतिं।
(६)ज्याया ममिति चादित्यं प्र वो वायुरिहोच्यते ॥४२॥
तं प्रत्नथे(क)ति सौमी वा दैव्यैन्द्री वा प्रजापतेः ।
परोक्षवैश्वदेवं तदाह कौषीतकिः स्वयम् ॥४३॥
तेषु तृतीयमित्युक्तं देवान् ऊव(ख) इदं परम् ।

---

(१) त्विति क० ग० घ० च० ।
(२) चाश्विनीति क० ग० घ० च० ।
(३) इध्मेत्यैन्द्रार्गसावितीति ङ० पुस्तकान्तरच ।
(४) अग्निं धर्म्ममित्यादिसार्द्धश्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न पठितः ।
(५) पराञ्चन्तीति पुस्तकान्तरम् ।
(६) ज्यया समिति चादित्यमित्यादि देवान् ऊव इदं परमित्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते ।

---

(क) ऋ० १, ६६, १ । (ख) ऋ० १, १०, ० ।

देवानां पत्नीरिति तु [१]देवपत्न्यो ध्रुवे स्तुताः ॥४४॥

अयं वज्रामिति चेन्द्रावायू

त्रिभिः स्तुतौ वायवुक्थे[क]ति वायुम् ।

एवं ध्रुवा रोदसी स्त्वयतेऽच

यस्याः स्तुता मरुतो रुद्रपत्न्याः[२] ॥४५॥

आरुद्रा अ इति त्वेषां रुद्राणां संस्तुतो गणः ।

मरुतान्तु गणश्चैते भाषा[३]रुद्रा इति स्तुताः[४] ॥४६॥

अथावग्निरिमौ[५] चोभौ लग्नौ[६]पार्थिवमध्यमौ[७] ।

यदुत्तमे व्येऽर्द्धर्चे इत्ले[ख]ऽग्निं संस्तुतौ ध्रुवे ॥४७॥

मध्यमा वाक् स्त्रियः सर्व्वाः पुमान् मारुत्र मध्यमः ।

गणाश्च सर्व्वे मरुतो गुणभेदात् पृथक् पृथक्[८] ॥४८॥

---

(१) चेति ख० ङ० पुस्तकान्तरयोः ।

(२) क० ग० च० चिह्नितपुस्तकेषु, अयं वज्रामिनीति श्लोकस्थले, अयं वज्रामिति च इन्द्रावायुस्त्रिभिः स्तुतौ । वायुर्वितीययान्येका स्यान्विति तु रोदसी । इति पाठो वर्त्तते ।

(३) गणश्चैतद्यामेति क० ग० घ० च० ।

(४) स्तुताः इति क० ग० घ० च० ।

(५) अथमिति ख० पुस्तकान्तरयोः ।

(६) चोभावमी इति ख० पुस्तकान्तरयोः ।

(७) पार्थिवमध्यमाविति ख० ।

(८) क० ग० घ० च० चिह्नितपुस्तकेषु, यदुत्तमे व्येऽर्द्धर्चे इत्यादिसार्द्ध-श्लोकस्थले अग्ने मरुद्भिरित्यस्यां मरुद्भिः सह संस्तुताविति श्लोकार्द्धं वर्त्तते ।

---

(क) ऋ० ७, ९०, ४ । (ख) ऋ० १, १६८, ८ ।

राजर्षिरभवद्दार्भ्यो रथवीति[क]रिति श्रुतः[१]।
स यक्ष्यमाणो राजर्षिरभिगम्य प्रसाद्य च ॥४९॥
आत्मानं कार्य्यमर्थं[२]च ख्यापयन् प्राञ्जलिः स्थितः।
अवृणीतर्षिमात्रेयमार्चिज्यायार्चनानसम्[ख] ॥५०॥
स सपुत्रोऽभ्यगच्छत्तं राजानं यज्ञसिद्धये।
श्यावाश्व[ग]श्चात्रिपुत्रस्य पुत्रः खल्वर्चनानसः ॥५१॥
साङ्गोपाङ्गान् सर्व्ववेदान् यः पित्राध्यापितो मुदा।
अर्चनानाः सपुत्रोऽथ गत्वा नृपमयाजयत्[३]।
यज्ञे च विततेऽपश्यद्राजपुत्रीं यशस्विनीम् ॥५२॥
स्नुषा मे राजपुत्री स्यादिति तस्य मनोऽभवत्।
श्यावाश्वस्य च तस्यां वै सक्तमासीत्तदा मनः[४] ॥५३॥
संयुज्यस्व मया राजन्निति याज्यञ्च सोऽब्रवीत्।
श्यावाश्वाय सुतां दित्सुर्महिषीं स्वां नृपोऽब्रवीत् ॥५४॥
किं ते पुत्रीमहं कन्यां श्यावाश्वाय ददामि हि।
अत्रिपुत्रो दुर्बलो हि जामाता नावयोरिति ॥५५॥
राजानमब्रवीत् सापि नृपर्षिकुलजा ह्यहम्।

(१) श्रुविरिति ङ० पुस्तकान्तरस्थ।

(२) कार्य्यवन्तमिति ङ० पुस्तकान्तरस्थ।

(३) श्यावाश्वश्चात्रिपुत्रस्येति सार्द्धैकश्लोका क० ख० च० चिह्नितपुस्तकेषु नोपलभ्यते।

(४) एतच्छ्लोकार्द्धं क० ख० च० चिह्नितपुस्तकेषु न दृश्यते।

(क) ऋ० ५ ६१, १८। (ख) ऋ० ५, ६४, ७। (ग) ऋ० ५, ६१, ५।

नानृषिर्नौ हि जामाता नैष मन्त्रान् हि दृष्टवान् ॥५६॥
ऋषये दीयतां कन्या चेदृष्टा वा भवेत्तथा।
ऋषिं मन्त्रदृशं वेदपितरं मन्यते यतः(१) ॥५७॥
प्रत्याचष्टे स(२) तं राजा सह सम्मन्त्र्य भार्य्यया।
अनृषिर्नौ न(३) जामाता कश्चिद्भवितुमर्हति ॥५८॥
प्रत्याख्यात ऋषिस्तेन वृत्ते यज्ञे न्यवर्त्तत।
श्यावाश्वस्य तु कन्यायां मनो नैव न्यवर्त्तत(४) ॥५९॥
ततः स्तुतौ(५) निवर्त्याशु तावेतावभिजग्मतुः(६)।
प्रग्रीयसौ(क)(७) तरन्त(ख)ञ्च पुरुमीळ्ह(ग)(८)ञ्च पार्थिवम्(९) ॥६०॥
तरन्तपुरुमीळ्हौ(१०) तु राजानौ वै ददर्श्यृषी(११)।
ताभ्यान्तौ चक्रतुः पूजामृषिभ्यां नृपती(१२) स्वयम् ॥६१॥

---

(१) श्यावाश्वाय सुता दित्सुरित्यादिसार्द्धश्लोकत्रयं क० ग० घ० च०-चिह्नितपुस्तकेषु नेक्ष्यते।
(२) प्रत्योषत्त्वथेति ख० ङ० पुस्तकान्तरञ्च।
(३) नैवेति ग०।
(४) न स्म निवर्त्तते इति ख० ङ० पुस्तकान्तरञ्च।
(५) ततस्तौ त्विति क० ग० घ० च०।
(६) ततः स्तुतौ निवर्त्तेत उभावेवाभिजग्मतुरिति ख० ङ० पुस्तकान्तरञ्च।
(७) प्रस्तोयसौति ङ० पुस्तकान्तरञ्च।
(८) पुरुमीढमिति ङ०।
(९) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न पठितं।
(१०) तरन्तपुरुमीढाविति ङ० पुस्तकान्तरञ्च।
(११) ददर्शिमाविति क० घ० च०।
(१२) तु पतिरिति क० घ० च०।

---

(क) ऋ० ५, ६१, ६। (ख) ऋ० १, १०५, ११। (ग) ऋ० ८, ७१, १४।

ऋषिपुत्त्रं महिष्याश्च दर्शयामास तं[१] नृपः ।
तरन्तानुमतेनैव[२] प्रादाद्बहुविधं वसु ॥६२॥
अजाविकं गवाश्वञ्च श्यावाश्वाय शशीयसी[३] ।
अर्चिं[४] याच्यार्चितौ गत्वा पितापुत्त्रौ स्वमाश्रमम् ॥६३॥
अभ्यवादयतामर्चिं[५] महर्षिं दीप्ततेजसम् ।
श्यावाश्वस्य मनस्यासीन्मन्त्रस्यादर्शनादहम् ॥६४॥
न लब्धवानिमां कन्यां हन्त सर्वाङ्गशोभनाम् ।
अथाहं मन्त्रदर्शी स्यां भवेद्धर्षो महान् मम ॥६५॥
इत्यरण्ये चिन्तयतः प्रादुरासीन्मरुद्गणः[६] ।
ददर्श संस्थितान् पार्श्वे तुल्यरूपान्महात्मनः[७] ॥६६॥
समानवयसश्चैव[८] मरुतो रुक्मवक्षसः ।
तांस्तुल्यवयसो दृष्ट्वा देवान् पुरुषविग्रहान् ॥६७॥
श्यावाश्वो विस्मितोऽपृच्छत्केष्ठेति[९] मरुतस्तदा ।

---

(१) वै इति ख० घ० ।
(२) तरन्तानुमता चैवेति क० ग० घ० च० ।
(३) शशीयसीति घ० पुस्तकान्तरञ्च ।
(४) तौ त्विति पाठः सङ्गतः ।
(५) अभ्यवादयतातस्तमिति ङ० पुस्तकान्तरञ्च ।
(६) अर्चिं याच्यार्चितौ गत्वेत्यादि प्रादुरासीन्मरुद्गणः इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु नेक्ष्यते ।
(७) तुल्यरूपानिवात्मन. इति क० ख० ग० घ० च० ।
(८) चैवमिति घ० पुस्तकान्तरञ्च ।
(९) के स्थेति पाठः समीचीनः । केऽष्ठेतीति क०, कोऽष्ठेतीति घ० ।

तेनस्तु मरुतो देवानृषिस्तानन्वबुध्यत[1] ॥६८॥
य ईं वहन्त इत्यृग्भिः षड्भि[2] स्तुष्टाव तांस्तथा ।
अतिक्रमं क्षितम्टषिर्मेने विपुलमात्मनः ॥६९॥
यत्र[3] दृष्ट्वैव तुष्टाव यच्च[4] केष्वेति[5] पृष्टवान् ।
स्तुताः स्तुत्यानया प्रीता गच्छन्तः पृश्निमातरः[क] ॥७०॥
अवमुच्य स्ववक्षोभ्यो[6] रुक्मं तस्मै तदा ददुः ।
मरुत्सु तु प्रयातेषु श्यावाश्वस्तु महायशाः[7] ॥७१॥
रथवीतेर्दुहितरमगच्छन्मनसा तदा ।
स मत्र ऋषिरात्मानं विवक्षूरथवीतये[8] ॥७२॥
एतं मे स्तोममित्यृग्भ्यां[9] दौत्ये[10] रात्रीं न्ययोजयत् ।
रथवीतिं तपस्यन्तं[11] समीक्ष्यार्षेण चक्षुषा ॥७३॥

---

(१) यमसूनन्वबुध्यतेति क॰ ग॰ घ॰ च॰ ।
(२) बुद्धेति क॰ ग॰ घ॰ च॰ ।
(३) यात्र इति क॰ घ॰ च॰ ।
(४) यास्मेति क॰ ग॰ घ॰ च॰ ।
(५) केष्टेतीति क॰, केष्ठेतीति ङ॰ ।
(६) ध्यमुच्यत स्वकाण्ठेभ्यः इति ख॰, व्यामुच्यते स्वकण्ठेभ्यः इति ङ॰ ।
(७) महातमा इति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(८) प्रवक्ष्यन्नथवीतये इति क॰ ग॰ घ॰ च॰ ।
(९) इत्याभ्यामिति क॰ ग॰ घ॰ च॰ ।
(१०) दूत्ये इति ख॰ पुस्तकान्तरञ्च ।
(११) रथवीतिमपश्यन्तीमिति ख॰ ङ॰ ।

---

(क) ऋ॰ ५, ५२, १॰ ।

स्रवतामपि गर्भाणां दृष्टं तदनुमन्त्रणम्[1]।
भावद्वत्तं तु तत्तस्यास्तयारूपं हि दृश्यते ॥८५॥
जरायुगर्भशब्दाभ्यामेतद्रूपं हि दृश्यते[1]।
मह्ये उपस्थे[2] सावित्रं युञ्जतेच्छावदः[3] स्तुतः ॥८६॥
पर्जन्यो वक्तिति लस्मिन्[4] पृथिवी मध्यमा तु[5]वाक्[6]।
श्रद्धा नो देवसवितरियं दुःस्वप्ननाशिनी[7] ॥८७॥
वारुणन्तु प्रसम्राजे पञ्चसैन्द्राग्रसुत्तरम्[8]।
विष्णुं न्यग्न[9]म्परस्मेति मारुतं सूक्तमुत्तरम्[10] ॥८८॥
एतया मरुदाख्यातं यौनेन्द्रे प्रतिपूर्व्वकम्[11]।

---

(१) स्रवतामपि गर्भाणामित्यादिसार्द्धैकश्लोकः क॰ ग॰ घ॰ च॰ चिह्नित-पुस्तकेषु नापलभ्यते।

(२) मह्योयस्थेवोति क॰ घ॰ च॰।

(३) सावित्रे युञ्जतेच्छेति वै इति क॰ ग॰ घ॰ च॰।

(४) पर्ज्जन्यस्तु वक्तिस्थेतोति ख॰ पुस्तकान्तरञ्च।

(५) न्वित्वि ग॰।

(६) स्तुतेति ख॰ पुस्तकान्तरञ्च।

(७) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते।

(८) उत्तरमित्यत्र उत्तममिति क॰, इन्द्राग्नीन्द्राग्नमुच्यते इति ख॰, मिन्द्राग्नीन्द्राग्नमुच्यते इति ख॰ पुस्तकान्तरञ्च।

(९) विष्णुं चिन्न्मिति ख॰ पुस्तकान्तरञ्च।

(१०) उत्तममिति ख॰।

(११) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नोपलभ्यते।

श्रीसूक्तमाशीर्वादस्तु[१] स्त्रीपुत्राणां पराणि तु[२] ॥८९॥
तत्स्याद्वा[३]लक्ष्म्यपनुद[४] मग्निस्तत्र[५] निपातभाक् ।
प्रजावान् जीवपुत्रो[६] वा गर्भकर्मणि संस्तुतौ ॥९०॥
नानारूपाः पयस्विन्यः[७] संस्रवन्तीति संस्तुताः[८] ।
आशीर्वादेषु संज्ञासु कर्मसंस्थास्तु देवताः[९] ॥९१॥
निपातभाग् लिङ्गवाक्यात्[१०] परीचेतेह मन्त्रवित् ।
मन्त्रप्रयोगमन्त्रयोः[११] प्रयोगो[१२] बलवत्तरः ॥९२॥

---

(१) आशीर्वादो स्यादिति ख०, आशीर्वादास्त्विति ङ० पुस्तकान्तरञ्च।

(२) स्त्रीपुत्राणां पराणि षट् इति क० घ० च०, षट् इति ग०, स्त्रीः पुत्राणां पराश्च षट् इति ङ० पुस्तकान्तरञ्च ।

(३) तस्यादेति क० घ० च० ।

(४) लक्ष्म्यपनिर्नोदः इति क० घ० च०, स्याद्यालक्ष्मीं पतेर्नोदे इति ख०, अलक्ष्म्यपनिर्नोदे इति ङ० पुस्तकान्तरञ्च ।

(५) स्तत्रेति ख० ङ० ।

(६) प्रजावज्जीवपुत्र- इति क० ख० ग० घ० च०, प्रजावान् जीवपुत्रा इति ङ० ।

(७) यथास्विन्यः इति ख० ग० ।

(८) संस्तुताविति ङ० ।

(९) कर्मसंस्था तु देवतेति ख० ।

(१०) लिङ्गवाक्येति ख० ग० ।

(११) मन्त्रप्रयोगमन्त्राख्यामिति ग० ।

(१२) प्रयोगे इति ग० ।

रम्ये हिमवतः पृष्ठ एषचेतीति चाब्रवीत्।
ऋषेर्नियोगमाज्ञाय देव्या राज्ञ्या प्रचोदितः।
आदाय कन्यां तां दार्भ्य उपेयायार्चनानसम् ॥७४॥
पादौ तस्योपसङ्गृह्य स्थितः(१) प्रह्वः कृताञ्जलिः।
रथवीतिरहं दार्भ्य इति नाम शशंस च ॥७५॥
मया सङ्गति(२ मिच्छन्तं त्वां प्रत्याचक्षि यत्पुरा।
तत् क्षमस्व नमस्तेऽस्तु मा च मे भगवन् क्रुधाः(३) ॥७६॥
ऋषेः पुत्रः स्वयमृषिः(४) पितासि भगवन्नृषेः।
हन्त प्रतिगृहाणेमां स्नुषामित्येवमब्रवीत्(५) ॥७७॥
पाद्यार्घ्यमधुपर्कैश्च पूजयित्वाथ तं(६) नृपः।
शुक्लमश्वशतं दत्त्वा अनुजज्ञे गृहान् प्रति ॥७८॥
प्रप्रीयमौ(७) तरन्तश्च पुरुमीळ्ह(८)श्च पार्थिवम्।
षड्भिः सनदिति स्तुत्वा जगामर्षिरपि स्वयम्(९) ॥७९॥

---

(१) स्थित्वेति ख० ग० पुस्तकान्तरञ्च।
(२) संयोगमिति ख० ग० पुस्तकान्तरञ्च।
(३) क्रुधः इति ख० ग० पुस्तकान्तरञ्च।
(४) पर्षिरिति ख० ग० पुस्तकान्तरञ्च।
(५) स्नुषान्तेऽन्विति चाब्रवीदिति ख० ग० पुस्तकान्तरञ्च।
(६) चार्चनाना स्वयमिति क० ग० घ०।
(७) प्रचोदयोमिति ग० पुस्तकान्तरञ्च।
(८) पुरुमीढमिति ग० पुस्तकान्तरञ्च।
(९) स्वयमिति क० ख० ग० घ०।

ऋतेन मैत्रावरुणान्येकादशपराणि तु।
षडाश्विनानि[१] गर्भार्था पञ्चर्चूपनिषत्स्तुतिः[२] ॥८०॥
सप्तकृत्वोऽपराधे तु[३] विफले दारसंपष्टे।
ऋषिः कृतो[४]ऽश्वमेधेन भारतेनेति वै श्रुतिः[५] ॥८१॥
ततोऽष्टमे[६]ऽपराधे तु वृचद्रोण्यां स पार्थिवः।
ऋषिं[७]सेह[८] विनिक्षिप्य स्कन्नं रात्रौ न्यधारयत्[९] ॥८२॥
सोऽश्विनाविति सूक्तेन तुष्टावर्षिः शुभस्पती।
तौ तं तस्मात् समुद्धृत्य चक्रतुः सफलं पुनः ॥८३॥
त्वचस्तस्यैव गर्भार्थं स्वपत[१०]स्तस्य गर्भवत्।
यथा वात इति ज्ञेये लक्ष्यिभ्यामितरे ऋचौ[११] ॥८४॥

---

(१) षडाश्विनावीति क० ग० घ० च०।
(२) गर्भार्थे पञ्चर्चोपनिषत्स्तुतिरिति ग०। स्तुविरित्यत्र तुवीति क० घ०, तुषीति च०।
(३) सप्त कृत्वापराधान् वै इति क० घ० च०, सप्तकृत्वोऽपराधान् वै इति ग०।
(४) ततः इति ङ० पुस्तकान्तरञ्च, ऋषौ कृत्वेति ग०।
(५) नः श्रुतमिति ङ० पुस्तकान्तरञ्च।
(६) तमष्टमे इति क० ग० घ० च०।
(७) ऋषीनिति ङ० पुस्तकान्तरञ्च।
(८) ऋषीसेमा इति घ० च०।
(९) रात्रौ रात्रौ न्याधावयदिति क० घ० च०।
(१०) त्रिचस्तस्यैव गर्भार्थंस्तपत इति ङ० पुस्तकान्तरञ्च।
(११) येमावग्निभ्यामितरौ वृषाविति ख० ङ० पुस्तकान्तरञ्च।

स्ववतामपि गर्भाणां दृष्टं तदनुमन्त्रणम्।
भावदृत्तं तु तत्तस्यास्तथारूपं हि दृश्यते ॥८५॥
जरायुर्गर्भशब्दाभ्यामेतद्रूपं हि दृश्यते[१]।
मह्ये उपस्थे[२] सावित्रं युञ्जतेच्छावदः[३] स्तुतः ॥८६॥
पर्जन्यो वलितिति त्वस्मिन्[४] पृथिवी मध्यमा तु[५]वाक्[६]।
श्रद्धा नो देवसवितरियं दुःस्वप्ननाशिनी[७] ॥८७॥
वारुणन्तु प्रसवाने पद्भमैन्द्राग्नमुत्तरम्[८]।
विष्णुं न्यङ्ग[९]म्परस्मेति मारुतं सूक्तमुत्तरम्[१०] ॥८८॥
एतया मरुदाख्यातं चौर्नैन्द्रे प्रतिपूर्व्वकम्[११]।

---

(१) स्ववतामपि गर्भाणामित्यादिसार्द्धकश्लोकः क॰ ग॰ घ॰ ङ॰ चिह्नितपुस्तकेषु नापश्यत।
(२) मह्योयसेतीति क॰ घ॰ ङ॰।
(३) सावित्रे युञ्जतेच्छेति वै इति क॰ ग॰ घ॰ ङ॰।
(४) पर्ज्जन्यस्तु वलित्येतीति ख॰ पुस्तकान्तरञ्च।
(५) न्विति ग॰।
(६) स्तुतेति ख॰ पुस्तकान्तरञ्च।
(७) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ ङ॰ चिह्नितपुस्तकेषु न दृश्यते।
(८) उत्तरमित्यत्र उत्तममिति क॰, इन्द्राभिःआग्नमुच्यते इति ख॰, मिन्द्रायेन्द्राग्नमुच्यते इति ख॰ पुस्तकान्तरञ्च।
(९) विष्णुं पिङ्गमिति ख॰ पुस्तकान्तरञ्च।
(१०) उत्तममिति ख॰।
(११) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ ङ॰ चिह्नितपुस्तकेषु नोपलभ्यते।

श्रीसूक्तमाशीर्वादस्तु[१] स्त्रीपुत्राणां पराणि तु[२] ॥८९॥
तत्स्याद्वा[३]लक्ष्म्यपनुद्[४] मग्निस्तत्र[५] निपातभाक्।
प्रजावान् जीवपुत्रो[६] वा गर्भकर्मणि संस्तुतौ ॥९०॥
नानारूपाः पयस्विन्यः[७] संस्रवन्तीति संस्तुताः[८]।
आशीर्वादेषु संज्ञास्तु कर्मसंस्थास्तु देवताः[९] ॥९१॥
निपातभाग् लिङ्गवाक्यात्[१०] परीक्षेतैव मन्त्रवित्।
मन्त्रप्रयोगमन्त्रयोः[११] प्रयोगो[१२] बलवत्तरः ॥९२॥

---

(१) आशीर्वादो स्यादिति ख०, आशीर्वादास्त्विति ङ० पुस्तकान्तरञ्च।

(२) श्रीपुत्राणां पराणि षट् इति क० घ० च०, षट् इति ग०, स्त्रीः पुत्राणां पराश्च षट् इति ङ० पुस्तकान्तरञ्च।

(३) तस्यादेति क० घ० च०।

(४) लक्ष्म्यपनिर्नोदः इति क० घ० च०, स्याद्यालक्ष्मी पदैर्नोदे इति ख०, अलक्ष्म्यपनिर्नोदे इति ङ० पुस्तकान्तरञ्च।

(५) स्तनेति ख० ङ०।

(६) प्रजावज्जीवपुत्रः इति क० ख० ग० घ० च०, प्रजावान् जीवपुत्रा इति ङ०।

(७) पयास्विन्यः इति ख० ग०।

(८) संस्तुताविति ङ०।

(९) कर्मसंस्था तु देवतेति ख०।

(१०) लिङ्गवाक्येति ख० ग०।

(११) मन्त्रप्रयोगमन्त्राणामिति ग०।

(१२) प्रयोगे इति ग०।

विधिस्तयोः परीक्षा[१] स्यान्मन्त्राः स्युरभिधायकाः[२] ।
तस्मात्तेन विसंवादो मन्त्राणां तद्गतानि तु ॥९३॥
गुणाभिधायकानि स्युः सविज्ञानपदानि तु ।
मन्त्रेषु गुणभूतेषु प्रधानेषु च कर्मसु ॥९४॥
प्रधानगुणभूताः स्युर्देवता इति गम्यते ।
त्रिसांवत्सरिकं सत्रं प्रजाकामः प्रजापतिः ॥९५॥
आहरत्सहितः साध्यैर्विश्वैर्देवैः सहेति च ।
तत्र वाग्दीक्षणीयायामाजगामाशरीरिणी[३] ॥९६॥
तां दृष्ट्वा युगपत्तत्र कस्याथ वरुणस्य च ।
शुक्रं चस्कन्द तद्वाभ्यामग्नौ प्रास्त[४] यदृच्छया ॥९७॥
ततोऽर्चिर्भ्यो भृगुर्जज्ञे अङ्गारेभ्योऽङ्गिरा[क][५] ऋषिः ।
प्रजापतिस्तौ दृष्ट्वा दृष्ट्वा वाग्भ्यभाषत ॥९८॥
आभ्यामृषिस्तृतीयोऽपि भवेदेव मे सुतः ।
प्रजापतिस्तथेत्युक्तः प्रत्यभाषत भारतीम् ॥९९॥
ऋषिरत्रिस्ततो जज्ञे सूर्यानलसमद्युतिः ।
योऽङ्गारेभ्य ऋषिर्जज्ञे तस्य पुत्रो बृहस्पतिः ॥१००॥

(१) परीक्ष्य इति ख० ।
(२) अभिधानकाः इति ख०, अभिधानिका इति ग० ।
(३) अशरीरिणीति शुद्धः पाठः ।
(४) प्रास्यमिति ख०, प्रास्येति ग० ।
(५) अङ्गारस्याङ्गिरा इति ख०, अङ्गारेभ्यङ्गिरा इति ग० ।

(क) ऋ० १, ३१, १ ।

बृहस्पतेर्भरद्वाजो विदधीति[१] य उच्यते[२] ।
मरुत्वासीद्गुरुर्यस्य[३] स एवाङ्गिरसो नपात्[क] ॥१०१॥
सपुत्त्रस्य तु तस्येद[४] मण्डलं षष्ठमुच्यते ।
त्वं ह्यग्न इति तत्राद्यावाग्नेयानि त्रयोदश ॥१०२॥
सूक्तानि त्रीणि मूर्द्धानमग्नेर्वैश्वानरस्य तु ।
एकान्नविंशतिश्चैव[५] पिबेन्त्यैन्द्राण्य[६]तः परम् ॥१०३॥
अग्ने सचे पदित्यस्यां द्वौ देवौ तु[७] निपातितौ ।
प्रोतये नूम[८] इत्येते वैश्वदेव्यावृचौ तु ते[९] ॥१०४॥
ऋग्द्वितीया पदस्यान्त्यमैन्द्रमेति[१०] गवां स्तुतिः ।
आमसापणास[ख] इत्यस्यां वायुरिन्द्रस्य संस्तुतौ[११] ॥१०५॥
इन्द्रः प्राधान्यतो वात्र स्तुतो वायुर्निपातभाक् ।

---

(१) विदधीतीति ङ० ।
(२) प्रभावान् जीवपुत्त्रो वा इत्यादि विदधीति य उच्यते इत्यन्तपाठः क० घ० च० चिह्नितपुस्तकेषु नापश्यत ।
(३) भुवन्यस्येति क० घ० च०, गुरोर्यस्येति ख० ग० ।
(४) ससपुत्त्रस्य तस्यैतदिति क० ग० घ० च० ।
(५) एकाग्निर्विंशदेवाचेति ख०, एकान्नविंशदेवाचेति ङ० । एकोनविंशतिरिति भवितुमर्हति ।
(६) पिबन्त्यैन्द्राणीति पाठः शुद्धः ।
(७) देवौ याविति क० ग० घ० च० ।
(८) नम इति क० घ० च० ।
(९) सूते इति ङ० ।
(१०) चेतीति ग० ।
(११) इन्द्रवायू सह स्तुताविति ङ० पुस्तकान्तरस्य ।

---

(क) ऋ० १, १४३, १ । (ख) ऋ० ६, ३७, ३ ।

अयं देवानृचं सौम्यमैन्द्रमेके प्रचक्षते[१] ॥१०६॥
शरीरं चक्षुरित्यस्या ऋचोऽधीति[२] ऋचो:[क] स्तुति.[३]।
पितरं स्तौति शयु[ख]श्च ऋचस्यान्ते पदे स्वयम्[४] ॥१०७॥
स्वादु[ग]ष्किलायमित्येताः पञ्चर्चः सौम्य एव वा[५]।
इन्द्रः प्रधानतो वात्र स्तुतः सोमो निपातभाक् ॥१०८॥
इन्द्रस्यैन्द्रनिपातोऽयं स्तुयन्ते शैतरेयके[६]।
अगव्यूति[घ] स्तौति देवान् पादो भूमिमथोत्तरः ॥१०९॥
बृहस्पति तृतीयोऽस्तौत्[७] लिङ्ग[८]मेवोत्तम पदम्।
स्वपिस्तु तौ तथेत्युक्त्वा पायु[ङ] पुत्रमभाषत ॥११०॥
अधर्षणीयौ शत्रूणां कुरुष्वेतौ[९] नृपाविति।
पितरं स तथेत्युक्त्वा युद्धोपकरणं तयोः ॥१११॥
जीमूतस्येति[१०] सूक्तेन पृथक्तेनान्वमन्त्रयत्।

---

(१) इन्द्र प्राधान्यतो वात्रेति श्लोकः क॰ ग॰ घ॰ ङ॰ चिह्नितपुस्तकेषु न दृश्यते।
(२) ऽधीतिरिति विसर्गयुक्तपाठः शुद्धः।
(३) य ध्यानयदिति त्वस्य ऋचोऽधीति ऋक्स्तुतिरिति क॰ ग॰ घ॰ ङ॰।
(४) ऋक्स्यान्ते पदे स्वकमिति ख॰ ङ॰ पुस्तकान्तरश्च।
(५) इति तु सौम्यः पञ्चर्च उत्तर इति क॰ ग॰ ङ॰।
(६) इन्द्रः प्रधानतो वात्रेत्यादि स्तूयन्ते शैतरेयके इत्यन्तपाठः क॰ ग॰ घ॰ ङ॰ चिह्नितपुस्तकेषु न विद्यते। स्तूयते इति शुद्धः पाठः।
(७) तृतीयस्त्विति क॰ ङ॰ पुस्तकान्तरञ्च।
(८) लिङ्गमिति पाठः साधुः।
(९) कुरु पुत्रेति ङ॰ पुस्तकान्तरञ्च।
(१०) जीमूतीयेनेति क॰ घ॰ ङ॰, जीमूतस्येवेति ग॰।

---

(क) ऋ॰ ६, ४५, ११। (ख) ऋ॰ १, १७, ६। (ग) ऋ॰ ६, ४४, २१। (घ) ऋ॰ ६, ४७, २०। (ङ) ऋ॰ २, २, ७।

प्रथमा त्वस्य सूक्तस्य योद्धारं स्तौति वर्म्मिणम् ॥ ११२॥
धनुः स्तौति[१] द्वितीया तु तृतीया ज्याभिमन्त्रिणी[२]।
स्तौति चार्त्नी[३] चतुर्थी च[४]गिषुधिं स्तौति पञ्चमी ॥११३॥
अर्द्धेन[४] सारथिं षष्ठ्या रश्मयोऽर्द्धेन संस्तुताः।
अश्वांस्तु सप्तमी स्तौति आयुधागारमष्टमी ॥११४॥
नवमी रथगोपांस्तु दशमी रथदेवताः।
इषुमेकादशी[५] स्तौति द्वादशी कवचस्तुतिः ॥११५॥
चयोदशी कशां स्तौति हस्तत्राणं चतुर्दशी।
प्रथमे पञ्चदश्यास्तु पादे दिग्धं[६] इषुः स्तुतः[७] ॥११६॥
अयोमुखी द्वितीये तु अर्द्धेऽस्त्रं[८] वारुणं परम्[९]।
षोडश्यां[१०] त्वस्य सूक्तस्य धनुर्मुक्त इषुः स्तुतः ॥११७॥
सप्तदश्यां तु युद्धादिः[११]कवचस्य च बन्धनं[१२]।

---

(१) धनुश्चेति क॰ घ॰ च॰।
(२) ज्याभिमन्त्रिणीति क॰ घ॰ च॰। ॰
(३) आर्त्न्यावार्त्नी चतुर्थी चेति क॰ ग॰ घ॰ च॰।
(४) अर्द्धेनेति क॰ घ॰ च॰।
(५) इषुधिश्चैकादशीति क॰ घ॰ च॰, इषुश्चैकादशीति ग॰।
(६) दिग्धः इति ग॰।
(७) इषुस्तुतः इति ग॰ घ॰।
(८) अर्द्धस्त्रमिति घ॰।
(९) परे इति ख॰।
(१०) षोडशीति क॰ ग॰ घ॰ च॰।
(११) युद्धदेशीति क॰ घ॰ च॰, योद्धादेरिति घ॰।
(१२) बध्यत इति क॰ ग॰ घ॰ च॰।

---

(क) ऋ॰ ६, ७५, १।

अयं देवस्तृचं सौम्यमैन्द्रमेके प्रचक्षते[1] ॥१०६॥
शरीरं चक्षुरित्यस्यां ऋचोऽधीति[2] ऋषेः[क] स्तुतिः[3] ।
पितरं स्तौति शंयु[ख]श्च ऋचस्यान्ते पदे स्वयम्[4] ॥१०७॥
स्वादु[ग]ष्किलायमित्येताः पञ्चर्चः सौम्य एव वा[5]।
इन्द्रः प्रधानतो वात्र स्तुतः सोमो निपातभाक् ॥१०८॥
इन्द्रस्यैन्द्रनिपातोऽयं स्तूयन्ते ह्यैतरेयके[6] ।
अगव्यूति[घ] स्तौति देवान् पादो भूमिमथोत्तरः ॥१०९॥
बृहस्पतिं तृतीयोऽस्तौत्[7] त्विन्द्र[8]मेवोत्तमं पदम् ।
ऋषिस्तु तौ तथेत्युक्त्वा पायुं[ङ] पुत्रमभाषत ॥११०॥
अधर्षणीयौ शत्रूणां कुरुष्वैतौ[9] नृपाविति ।
पितरं स तथेत्युक्त्वा युद्धोपकरणं तयोः ॥१११॥
जीमूतस्येति[10] सूक्तेन पृथक्त्वेनाभ्यमन्त्रयत् ।

---

(१) इन्द्रः प्राधान्यतो वात्रेति श्लोकः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते ।
(२) ऋधीतिरिति विसर्गयुक्तपाठः शुद्धः।
(३) य स्थानयदिति त्वस्य ऋचोऽधीति ऋषुस्तुतिरिति क॰ ग॰ घ॰ च॰ ।
(४) सूक्तस्यान्ते पदे स्वकमिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(५) इति तु सौम्यः पञ्चर्च उत्तरः इति क॰ ग॰ च॰ ।
(६) इन्द्रः प्रधानतो वात्रेत्यादि स्तूयन्ते ह्यैतरेयके इत्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न विद्यते। स्तूयते इति शुद्धः पाठः।
(७) तृतीयस्त्विति क॰ ङ॰ पुस्तकान्तरञ्च।
(८) त्विन्द्रमिति पाठः साधुः ।
(९) कुरु पुत्रेति ख॰ पुस्तकान्तरञ्च।
(१०) जीमूतीयेनेति क॰ घ॰ च॰, जीमूतस्येति ग॰ ।

---

(क) ऋ॰ ६, ४५, ३३ । (ख) ऋ॰ १, ३४, ६ । (ग) ऋ॰ ६, ४४, २९ ।
(घ) ऋ॰ ६, ४७, २० । (ङ) ऋ॰ २, २, ४ ।

(१)प्रसङ्गादिह(२) याः सूक्ते देवताः परिकीर्त्तिताः ॥१२४॥
ता एव सूक्तभाजस्तु मेने राथीतरीसुतः(३)।
प्राजापत्यो मरीचिर्हि मारीचः कश्यपोऽभवत्(४) ॥१२५॥
तस्य देव्योऽभवञ्जाया(५) दाक्षायण्यस्त्रयोदश।
अदितिर्दितिर्दनुः काला दनायुः सिंहिका मुनिः(६) ॥१२६॥
क्रोधावशा वरिष्ठा च सुरभिर्विनता तथा।
कद्रूश्चैवेति दुहितॄः कश्यपाय ददौ स च(७) ॥१२७॥
तासु देवासुराश्चैव गन्धर्वोरगराक्षसाः।
वयांसि च पिशाचाश्च जज्ञिरेऽन्याश्च जातयः ॥१२८॥
तत्रैका त्वदितिर्देवी द्वादशाजनयत्(८) सुतान्।
भगश्चैवार्यमांश(क)श्च मित्रो वरुण एव च ॥१२९॥

---

(१) ख० ङ० चिह्नितपुस्तकयोः पुस्तकान्तरे च, प्रसङ्गादिह याः सूक्ते इति श्लोकार्द्धात् प्राक्,—
ऋषिरप्यभितुष्टाव दानं तत्र च तस्य तु।
ऋचैकया द्वयोश्चापि दत्तं सङ्कीर्त्तयन् स्वयम्॥
इत्यधिकं पठितम्।
(२) प्रसङ्गात्विहेति क० ग० घ० च०।
(३) राथीतरसुताविति क० घ० च०।
(४) मुनिरिति क० ग० घ० च०।
(५) जाता इति क० घ० च०।
(६) विशाविति ख०।
(७) अदितिरित्यादिसार्द्धैकश्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते।
(८) द्वन्द्वशोऽजनयदिति क० ग० घ० च०।

(क) ऋ० २, १, ४।

स्तुतिरष्टादशी ज्ञेया युयुत्सोर्दैव्यृगुत्तमा[1] ॥११८॥
आशास्ते चोत्तमे पादे ह्यपि[2]रात्मन आशिषः।
सूक्तेनानेन तु स्तुत्वा सञ्जामाङ्गान्यृषिस्तयोः ॥११९॥
ततः[3] प्रस्तावयामास पुनर्वारशिखान्[4] प्रति।
एतद्यत्ते चतसृभी राज्ञोः साहाय्यकाङ्क्षया ॥१२०॥
भरद्वाजोऽभितुष्टाव प्रीतस्तेन पुरन्दरः।
अभ्यावर्त्तिनमासाद्य हर्युपीयानदीतटे ॥१२१॥
सहितश्चायमानेन[क] जघानैतान् शचीपतिः[5]।
एवं[6] वारशिखा[7]ञ्जित्वा तावभ्यावर्त्ति[8]सार्ञ्जयौ[ख] ॥१२२॥
भरद्वाजाय गुरवे ददतुर्विविधं वसु।
भरद्वाजस्य गर्गस्य दृष्टाविन्द्रेण वै पथि ॥१२३॥
द्वौ च[9] प्रस्तोक[ग] इत्याभिर्दानं तस्मै[10] शशंसतुः।

---

(१) स्तुतिरुत्तमेति क॰ ग॰ घ॰ च॰।
(२) ह्यपिरिति ङ॰।
(३) तयोरिति क॰ ग॰ घ॰।
(४) वारशिखानिति ग॰।
(५) एतदृचस्ते चतसृभिरित्यादि जघानैतान् शचीपतिरित्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते।
(६) तौ त्विति क॰ ग॰ घ॰ च॰।
(७) वारशिखानिति ग॰।
(८) तावोऽभ्यावर्त्तीति क॰ ग॰ घ॰ च॰।
(९) ददानिति क॰ ग॰ घ॰ च॰।
(१०) तस्मै इति क॰ ग॰ घ॰ च॰।

(क) ऋ॰ ६, २७, ८। (ख) ऋ॰ ६, ४७, २५। (ग) ऋ॰ ६, ४७, २२।

(१)प्रसङ्गादिह(२) याः सूक्ते देवताः परिकीर्त्तिताः ॥१२४॥
ता एव सूक्तभाजस्तु मेने राथीतरीसुतः(३)।
प्राजापत्यो मरीचिर्हि मारीचः कश्यपोऽभवत्(४) ॥१२५॥
तस्य देव्योऽभवञ्जाया(५) दाक्षायण्यस्त्रयोदश।
अदितिर्दितिर्दनुः काला दनायुः सिंहिका मुनिः(६)॥१२६॥
क्रोधावशा वरिष्ठा च सुरभिर्विनता तथा।
कद्रूश्चैवेति दुहितॄः कश्यपाय ददौ स च(७) ॥१२७॥
तासु देवासुराश्चैव गन्धर्वोरगराक्षसाः।
वयांसि च पिशाचाश्च जज्ञिरेऽन्याश्च जातयः ॥१२८॥
तत्रैका त्वदितिर्देवी द्वादशाजनयत्(८) सुतान्।
भगश्चैवार्य्यमांश(क)श्च मित्रो वरुण एव च ॥१२९॥

---

(१) ख॰ ङ॰ चिह्नितपुस्तकयोः पुस्तकान्तरे च, प्रसङ्गादिह याः सूक्ते इति श्लोकार्द्धात् प्राक्,—
ऋषिरप्यभितुष्टाव दानं तत्र च तस्य तु।
ऋचैकया द्वयाँ श्चमे दत्तं सङ्कीर्त्तयन् स्वयम् ॥
इत्यधिकं पठितम्।
(२) प्रसङ्गा त्विहेति क॰ ग॰ घ॰ च॰।
(३) राथीतरसुताविति क॰ घ॰ च॰।
(४) मुनिरिति क॰ ग॰ घ॰ च॰।
(५) जाता इति क॰ घ॰ च॰।
(६) विगाविति ख॰।
(७) अदितिरित्यादिसार्द्धैकश्लोकः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न विद्यते।
(८) द्वन्द्वशोऽजनयदिति क॰ ग॰ घ॰ च॰।

---

(क) ऋ॰ २, १, ४।

धाता चैव विधाता च विवस्वांश्च महाद्युतिः ।
त्वष्टा पूषा तथैवेन्द्रो द्वादशो विष्णुरुच्यते[१] ॥१२०॥
द्वन्द्वं तस्यास्तु तज्जज्ञे[२] मित्रस्य वरुणस्य च[३] ।
तयोरादित्ययोः सत्रे दृष्ट्वाप्सरसमुर्वशीम् ॥१२१॥
रेतश्चस्कन्द कुम्भे तु[४] न्यपत[५]द्वासतीवरे ।
तेनैव तु मुहूर्तेन वीर्य्यवन्तौ तपस्विनौ ॥१२२॥
अगस्त्यश्च वसिष्ठश्च तत्रर्षी संबभूवतुः ।
बहुधा पतिते शुक्रे कलशेऽथ जले स्थले ॥१२३॥
स्थले वसिष्ठस्तु मुनिः सम्भूत ऋषिसत्तमः ।
कुम्भे त्वगस्त्यः सम्भूतो जले मत्स्यो महाद्युतिः[६] ॥१२४॥
उदियाय ततोऽगस्त्यः शम्या[क]मात्रो महायशाः[७] ।
मानेन सम्मितो यस्मात् तस्मान्मान्य इहोच्यते ॥१२५॥
यद्वा कुम्भादृषिर्जातः कुम्भेनापि हि[८] मीयते ।

---

(१) भगश्चैवार्य्यमांशश्चेत्यादियार्द्धश्लोकः ग० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते ।
(२) जज्ञाते इति च० ।
(३) मित्रस्य वरुणस्य चेति क० ख० ग० घ०, चश्चेति ख० ग० ।
(४) तत्कुम्भे इति ग० ङ० पुस्तकान्तरयोः ।
(५) न्यपतदिति ख० ङ० पुस्तकान्तरयोः ।
(६) बहुधा पतिते शुक्रे इत्यादिसार्द्धश्लोकः क० ग० घ० च० चिह्नित-पुस्तकेषु न पठितः ।
(७) महायशा इति ख० ङ० पुस्तकान्तरयोः ।
(८) कुम्भे मानोऽपीति क० घ० च० ।

---

(क) ऋ० १, ८४, ३ ।

कुम्भ इत्यभिधानन्तु परिमाणस्य लक्षणम्[१] ॥१२६॥
ततोऽप्सु गृह्यमाणासु वसिष्ठः पुष्करे स्थितः ।
सर्वतः[२] पुष्करं तत्र विश्वेदेवा अधारयन् ॥१२७॥
उत्थाय सलिलात्तस्मादथ तेपे महत्तपः ।
नामास्य गुणतो जज्ञे वसतेः श्रैष्ठ्यकर्मणः[३] ॥१२८॥
अदृश्यमृषिभिर्हीन्द्र[४] सोऽपश्यत्तपसा पुरा ।
सोमभागानयो[५] तस्मै प्रोवाच हरिवाहनः ॥१२९॥
ऋषयो वा इन्द्रमिति ब्राह्मणात्तद्धि दृश्यते[६] ।
वसिष्ठस्य वसिष्ठाश्च[७] ब्राह्मणा वै ततोऽभवन् ॥१४०॥
सर्वकर्मसु यज्ञेषु दीक्षणीयास्ततोऽभवन्[८] ।
तस्मादद्यापि[९] वासिष्ठाः सदस्यास्त्विह कर्मणि[१०] ॥१४१॥

---

(१) लक्ष्यते इति क॰ घ॰ च॰ ।
(२) सर्व्वत्रेति क॰ ग॰ घ॰ च॰ ।
(३) श्रेष्ठकर्म्मणः इति पाठः साधुः । श्रैष्ठकर्म्मणेति ङ॰ पुस्तकान्तरञ्च ।
(४) चैन्द्रमिति ङ॰ पुस्तकान्तरञ्च ।
(५) सोमभागांस्तत इति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(६) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते ।
(७) वासिष्ठाश्च वसिष्ठश्चेति पाठः सङ्गतः । वसिष्ठाश्च वसिष्ठाश्चेति क॰ च॰, वसिष्ठाश्च वसिष्ठाश्चेति ग॰ घ॰ ।
(८) सर्व्वमर्म्मसु यज्ञेषु दक्षिणीयतमास्तथेति क॰ घ॰ च॰ ।
(९) येऽद्यापीति क॰ ग॰ घ॰ च॰ ।
(१०) वसिष्ठाः सदस्याः स्युस्तु कर्त्विग्भिरिति क॰ ग॰ घ॰ च॰ ।

अर्द्धर्चेद्[१] दक्षिणाभिस्तान् भार्गवेयी श्रुति[२]स्त्रियम्[३]।
ऋषिस्तु मैत्रावरुणिः सूक्तैः षोडशभिः परैः ॥१४२॥
तुष्टाव चाग्नि[क]मित्यग्निमाग्नस्तव जुषस्व नः[ख]।
प्राग्नये[ग]ऽस्य प्रसवाजो[घ] द्वितीयं प्राग्नये[ङ] त्वचम् ॥१४३॥
वैश्वानरीयाण्येतानि[४] त्वे ह्ये[च]न्द्राणि पराण्यतः।
दश पञ्च च सूक्तानि निपातो मरुतां स्तुतिः ॥१४४॥
नकिः सुदास[छ] इत्यर्धां दानं पैजवनस्य तु।
वसिष्ठेन चतुर्थ्याग्नि[५]र्द्वे नप्तु[ज]रिति कीर्त्तितम् ॥१४५॥
संवादः सूक्तमैन्द्रं[६] वाश्विन्यं तत्तु[७] प्रचक्षते।
वसिष्ठागस्त्ययोरच कीर्त्यते तनयैः सह ॥१४६॥
इन्द्रेण चैव संवादो महिमा जन्म कर्म च।

---

(१) पूजयेदिति ख० ङ० पुस्तकान्तरञ्च।
(२) स्तुतिरिति क० घ० च०।
(३) दध्यर्च भार्गवी स्तुतिरिति ख० ङ०।
(४) वैश्वानरीयमित्येतदिति क० घ० च०।
(५) चतुर्भिस्त्विति क० ग० घ० च०।
(६) संवादमैन्द्रसूक्तमिति ङ० पुस्तकान्तरञ्च, संवादे सूक्तमैन्द्रे इति ख०।
(७) वाश्विनं वस्त्विति क० ग० घ० च०।

---

(क) ऋ० ७, १, १। (ख) ऋ० ७, २, १। (ग) ऋ० ७, ४, १।
(घ) ऋ० ७, ६, १। (ङ) ऋ० ७, १३, १। (च) ऋ० ७, १८, १।
(छ) ऋ० ७, १२, १०। (ज) ऋ० ७, १८, २२।

पराणि प्रे[क]ति चत्वारि वैश्वदेवानि यानि[१] तु ॥१४७॥
स्तौत्यृगन्ता[ख]महिं तत्र मानो[ग]ऽहिर्बुध्न्य[घ] एव च ।
अहिराहन्ति मेघान् स एति वा तेषु मध्यमः ॥१४८॥
योऽहिः स बुध्न्यो बुध्नेति सोऽन्तरिक्षेऽभिजायते[२] ।
उदुष्य[ङ]सवितुः सूक्तं[३] प्रश्नो [च]वाजिनदेवताः[४] ॥१४९॥
तृचो[५]ऽर्द्धर्चस्य पादोऽत्र प्रथमायामृचि स्तुतः[६] ।
पादश्चैव तृतीयोऽत्र प्रथमायामृचि स्तुतः[७] ॥१५०॥
यथार्द्धर्चौ भगमुग्र[छ]स्तथा नूनं भगो[ज]ऽपि च ।
स हि रत्नानि सविता सुवातीति भगः स वा[८] ॥१५१॥

---

(१) तत्रेति ख॰ ङ॰ पुस्तकान्तरयोः ।
(२) अहिराहन्तीत्यादि सोऽन्तरिक्षेऽभिजायते इत्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न विद्यते ।
(३) सूक्ते इति ख॰ ङ॰ ।
(४) वाजिनदेवत इति ख॰ ङ॰ पुस्तकान्तरयोः ।
(५) तृचः इति ग॰ ।
(६) तृचोऽर्द्धस्य भागोऽत्र भगमुग्र इति स्तुतिरिति ख॰ ङ॰ पुस्तकान्तरयोः । स्तुतिरित्यत्र स्तुतः इति ग॰ ।
(७) पञ्चम्यामहिर्दैवतः इति क॰ ग॰ घ॰ च॰ ।
(८) एष श्लोकः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नापश्यत ।

---

(क) ऋ॰ ७, ३९, १ । (ख) ऋ॰ ७, ३४, १६ । (ग) ऋ॰ ७, ३४, १७ । (घ) ऋ॰ ७, ३४, १७ । (ङ) ऋ॰ ७, ३८, १ । (च) ऋ॰ ७, ३८, ७ । (छ) ऋ॰ ७, ३८, ६ । (ज) ऋ॰ ७, ४१, ५ ।

वैश्वदेवानि पञ्चोर्ध्वपञ्चर्चो भगदेवताः[१]।
प्रातर्जित[क]मुपश्चोऽन्त्या द्रष्टुं च सौत्याग्नि[२]रेव वा ॥ १५२॥
एके तु प्रात[ख]रित्यस्यां भगमेव[३] प्रचक्षते।
आद्यान्ये ते तु ऋषयः कीर्त्तयन्ति[४] प्रथक्कृतः ॥ १५३॥
सूक्तेषु[५] देवता मान्या मान्यास्तत्र स्तुवन्ति[६] च।
आलोक्यात्[७]साहचर्य्याद्वा संस्तवादथ वा पुनः ॥ १५४॥
गणस्थानाद्भक्तितो वा कीर्त्यन्तेऽन्यास्तु देवताः।
दाधिक्रमथ सावित्रं रौद्रमित्यनुपूर्व्वशः ॥ १५५॥
दधिक्रां[ग] प्रथमायान्तु[८] देवताः परिकीर्त्तिताः।
ता ज्ञेया आप[घ] आप्यं स्यादार्भवः प्रथमस्तृचः ॥ १५६॥
उत्तमा वैश्वदेवी वा आर्भवी वा निगद्यते[९]। *

(१) पञ्चोर्ध्वः पञ्चर्चो भगदेवतः इति क० ख० ग० घ० च०।
(२) द्रष्टुः सौत्याग्नीरिति क० ग० च०, दृष्टश्चाग्नीरिति घ० पुस्तकान्तरञ्च।
(३) प्रातरित्येतां भगमेवेति ख० घ० पुस्तकान्तरञ्च।
(४) आद्यान्तेषु तु ह्येषु तु यत्कीर्त्तयन्तीति घ० पुस्तकान्तरञ्च।
(५) सूक्तेऽस्मिन्निति ख० ग० घ० पुस्तकान्तरञ्च।
(६) त्वन्या अन्यास्तत्र भवन्तीति ख० ग० घ० पुस्तकान्तरञ्च।
(७) आकाशादिति ख० घ० पुस्तकान्तरञ्च।
(८) प्रथमायान्त्विति क० ग० घ० च०।
(९) वैश्वदेवी तु समुद्रज्येष्ठेत्यपरा स्तुतिरिति क० घ० च०।

(क) ऋ० ७, ४१, २। (ख) ऋ० ७, ४१, १। (ग) ऋ० ७, ४४, १।
(घ) ऋ० ७, ४०, ५।

# अथ षष्ठोऽध्यायः।



आ मा(क)मिति तु सूक्तेन प्रत्यृचं देवताः स्तुताः।
मित्रावरुणावग्निश्च देवा नद्यस्तथैव च(१) ॥१॥
द्यावावादित्यदेवत्यौ रोदस्योः प्रे(ख)ति यस्तृचः।
वास्तोष्पत्यस्ततस्तस्य(२) प्रस्वापिन्य ऋचः स्तुताः(३) ॥२॥
परं(४) चत्वारि सूक्तानि मारुतानि क ई(ग)मिति।
तेषां तु पितरं देवं त्र्यम्बकं(घ) स्तौत्यृगुत्तमा ॥३॥
स्तुतौ तु मित्रावरुणौ सूक्तैर्य(ङ)दिति सप्तभिः।
अश्विनौ तु स्तुतौ(५) देवावष्टभिः प्रति वा(च)मिति ॥४॥
यद(छ)द्योत्सूर्य(ज) इति तिस्र उ(झ)द्वेतीत्यर्द्धपञ्चमाः।
सौर्यं तच्चक्षु(ञ)(६)रिति तु गीयते चक्षुर्देवता ॥५॥

---

(१) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न पठितम्।
(२) स्विति क० ग० घ० च०।
(३) त्वष्टौ प्रस्वापनी स्तुता इति क० ग० घ० च०।
(४) वतः इति ख० ङ० पुस्तकान्तरञ्च।
(५) परैरिति क० ग० घ० च०।
(६) तदत्तु सप्तर्चुरिति ख० ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० ७, ५०, १। (ख) ऋ० ७, ५३, १। (ग) ऋ० ७, ५८, १। (घ) ऋ० ७, ५९, १२। (ङ) ऋ० ७, ६०, १। (च) ऋ० ७, ६५, १। (छ) ऋ० ७, ६०, १। (ज) ऋ० ७, ६२, १। (झ) ऋ० ७, ६३, १। (ञ) ७, ६६, १६।

आदित्यानां तद्दो[क] ऽद्य द्वे ऋचौ शौनकोऽब्रवीत् ।
अन्याः सर्व्वा ऋचः सौर्य्या यदद्याद्याः[ख]प्रकीर्त्तिताः ॥६॥
इमे चेतार[ग] इत्याद्याः[१] सत्रे मित्रो मितः स्तुतः ।
अर्य्यम्णो वरुणस्यापि मित्रस्यैता नव स्तुताः ॥७॥
यदद्य सूरे[घ] इत्याद्या दशादित्या ऋचः स्तुताः ।
सविता चा[२]दितिर्मित्रो वरुणश्चार्य्यमा भगः ॥८॥
स्तुता उदु त्य[ङ]दित्येतास्तिस्रः सौर्य्यस्ततः पराः ।
आशीस्तच्चक्षु[च]रित्येतामाचार्य्यः शौनकोऽब्रवीत्[३] ॥९॥
उपास्तु सप्तभिर्व्युषाः[छ] सूक्तान्येभ्यः पराणि तु ।
चत्वारीन्द्रावारुणानि[४] इन्द्रावरुणयोः स्तुतिः ॥१०॥
उदु ज्योति[ज]रिति त्वस्मिन्नर्द्धर्चे मध्यमः स्तुतः[५] ।
वरुणस्य गृहान्यातो वसिष्ठः स्वप्न[६] आचरत् ॥११॥
प्रविवेशाथ तं तत्र श्वा नदन्नभ्यवर्त्तत[७] ।

---

(१) इत्याद्यैरिति पाठः सङ्गतार्थः ।
(२) वेति ख॰ ङ॰ ।
(३) आदित्यानां तद्दो ऋचेत्यादयश्चत्वारः श्लोकाः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नेक्ष्यन्ते ।
(४) इन्द्रावरुणेतीति क॰ ग॰ घ॰ च॰ ।
(५) एतश्लोकार्द्धं क॰ ग॰ घ॰ चिह्नितपुस्तकेषु नापश्यत ।
(६) चौर्य्यमिति ङ॰ ।
(७) अभ्यधावतेति क॰ ग॰ घ॰ च॰ ।

---

(क) ऋ॰ ७, ६६, १२ । (ख) ऋ॰ ७, ६६, ४ । (ग) ऋ॰ ७, ६०, ५ ।
(घ) ऋ॰ ७, ६६, ४ । (ङ) ऋ॰ ७, ६६, १४ । (च) ऋ॰ ७, ६६, १६ ।
(छ) ऋ॰ ७, ७५, १ । (ज) ऋ॰ ७, ७६, १ ।

क्रन्दन्तं सारमेयं स धावन्तं द्रष्टुमुद्यतं ॥१२॥
यदर्जुने[क]ति च त्रिभिः सान्त्वयित्वा व्यसुष्वपत्[१] ।
स तं[२] प्रस्वापयामास जनमन्यश्च वारुणम् ॥१३॥
ततस्तु वरुणो राजा स्वान् पाशान् प्रत्यमुञ्चत[३] ।
स बद्धः[४] पितरं सूक्तैश्चतुर्भिरिति उत्तरैः[५] ॥१४॥
अभितुष्टाव धीरे[ख]ति मुमोचैनन्ततः पिता ।
ध्रुवासु त्वे[ग]ति चोक्तायां पाशा अस्मात्प्रमोचिरे[६] ॥१५॥
पराणि त्रीणि सूक्तानि वायव्यानि प्रवीरया[घ] ।
अत्र तास्त्वै[७]न्द्रवायव्याः ऋचो[८] यासु[९] द्विवत्स्तुतिः ॥१६॥
प्रवीरयोक्ता वायव्याः प्रा उ[१०] गीत्यैतरेयके ।

---

(१) क्रन्दन्तमित्यादि सान्त्वयित्वा व्यसुष्वपदित्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते ।
(२) एवमिति ख० ङ० पुस्तकान्तरञ्च ।
(३) स्वैः पाशैः प्रत्यबध्यत इति क० ग० घ० च० ।
(४) बुद्धेति क० घ० च ।
(५) बद्धः स वारुणैः पाशैः ध्रुवा सुत्वेति दृश्यते इति ख० ङ० पुस्तकान्तरञ्च ।
(६) मुमुचिरे इति पाठः शुद्धः ।
(७) चेति ख० ङ० पुस्तकान्तरञ्च ।
(८) स्तुताविति क० ग० घ० च० ।
(९) यास्विति ख० ङ० पुस्तकान्तरञ्च ।
(१०) प्रास्विति ख० ।

---

(क) ऋ० ७, ५५, २ । (ख) ७, ८६, १ । (ग) ऋ० ७, ८८, ७ ।
(घ) ऋ० ७, ९०, १ ।

पदस्य व्यत्ययं कृत्वा वायोः प्राधान्यमुच्यते ॥१७॥
ते सत्येन त्वचो यावन्तरस्तुर्चः पुनः।
उग्रन्तेका(क) प्रसोता(ख) चर्गद्वयोरेता नव स्मृताः(१) ॥१८॥
ऐन्द्राग्ने शुचि(ग)मित्येते प्रेति(घ) सारस्वते परे।
स्तुतस्यैव सरस्वांस्तु(२) जनियन्त(ङ)स्तृचैः(३) ॥१९॥
राजा वर्षसहस्राणि(४) दीर्घियज्ञाऽपः पुरा।
चचारैकरथेनेमां ब्रुवन् सर्व्वाः समुद्रगाः ॥२०॥
यच्छे वहत भागान् मे(५) द्वन्द्वशो वाप्यनेकशः(६)।
प्रत्यूचुस्तं नृपं नद्यस्त्वल्पवीर्याः कथं वयं ॥२१॥
वहेम भोगान् सर्वांस्ते सत्रे वार्षसहस्रिके(७)।

---

(१) प्रवीरयोक्त्वा वायव्या इत्यादि द्वयोरेता नव स्मृता इत्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नालोक्यते।
(२) देवा सरस्वान् स इतीति ख॰ पुस्तकान्तरञ्च। देवा इत्यत्र दृचे इति ख॰।
(३) चतसृभिरिति क॰ घ॰ च॰ प्रतिसृभिरिति ग॰।
(४) वर्षसहस्रायेति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।
(५) भोगान् मे इति पाठो युक्तः उत्तरत्र तथादर्शनात्। ऽपश्व मां सर्व्वामिति क॰ घ॰ च॰, वहध भागान् मे इति ग॰, वहत माः सर्व्वाः इति ङ॰।
(६) वाप वैकश इति क॰ ख॰ ग॰ घ॰ च॰।
(७) वर्षसहस्रके इति ख॰ ङ॰।

---

(क) ऋ॰ ७, ९१, २। (ख) ऋ॰ ७, ९२, २। (ग) ऋ॰ ७, ९३, १। (घ) ऋ॰ ७, ९५, १। (ङ) ऋ॰ ७, ९६, ४।

सरस्वतीं प्रपद्यस्व सा त्वा(१) वक्ष्यति नाहुष ॥२२॥
तथेत्युक्त्वा जगामाशु आपगां(२) स सरस्वतीम् ।
सा चैनं प्रतिजग्राह दुदुहे च पयो घृतम्(३) ॥२३॥
एतदत्यद्भुतं कर्म सरस्वत्या नृपं प्रति ।
वारुणिः(४) कीर्त्तयामास प्रथमस्य द्वितीयया ॥२४॥
द्वे बार्हस्पत्ये ऐन्द्रे च(५) वैष्णवे तु(६) परे ततः ।
उत्तमैन्द्र्यथ तिस्रः(क) स्युः(७) पर्जन्ये तिस्र उत्तरे ॥२५॥
आग्नीर्चक् प्रथमा तत्र प्रथमस्य तृतीयया ।
यज्ञे आग्नेन्द्रमेवासीदन्या त्विन्द्राबृहस्पती(८) ॥२६॥
तृतीया नवमी चैव स्तौतीन्द्राब्रह्मणस्पती(९) ।

---

(१) ते इति ख॰ ङ॰ पुस्तकान्तरञ्च ।

(२) जगामाथ पावनीमिति ख॰ ङ॰ पुस्तकान्तरञ्च ।

(३) प्रतिजग्राह सा चैनं पयः सर्पिश्च दुह्यतीति क॰ ग॰ घ॰ च॰ ।

(४) वारुणः इति ख॰ ।

(५) ऐन्द्रे यज्ञे दिवः सूक्ते इति क॰ घ॰ च॰, यज्ञे बार्हस्पत्यमैन्द्रमिति ग॰ ।

(६) चेति ख॰ ङ॰ पुस्तकान्तरञ्च ।

(७) तृचो द्वितीयोत्तमैन्द्रेति क॰ घ॰ च॰ ।

(८) आग्नीर्चक् प्रथमा तत्रेत्यादि अन्या त्विन्द्रा बृहस्पती इत्यन्तपाठः क॰ ग॰ ध॰ च॰ चिह्नितपुस्तकेषु नोपलभ्यते । तेषु अस्मिन् स्थले स्तौतीन्द्रं प्रथमा त्वथ द्वितीयाद्या बृहस्पतिं । इति श्लोकार्द्धं वर्त्तते ।

(९) तथेन्द्राब्रह्मणस्पती इति ख॰ ङ॰ पुस्तकान्तरञ्च ।

---

(क) ऋ॰ ७, १०१, १ ।

संवत्सर[क]न्तु माण्डूकमैन्द्रासोमं[१] परन्तु यत् ॥२७॥
अपिर्ददर्श रक्षोघ्नं[२] पुत्रशोकपरिप्लुतः।
हते पुत्रशते क्रुद्धः सौदासैर्दुःखितस्तदा[३] ॥२८॥
ये पाकशंस[ख]मृक् सौम्या[४] आग्नेयी तत उत्तरा।
एकादशी वैश्वदेवी सौम्यस्तस्याः परो तृचः[५] ॥२९॥
यदि वाह[ग]मृगाग्नेयी ऐन्द्री यो मे[घ]ति तु स्तुता[६]।
वारुणी प्रयाजिगातो[ङ]ति वितिष्ठध्वं[च] तु मारुती ॥३०॥
प्रवर्तये[छ]ति पञ्चेन्द्य ऐन्द्रासोमीत्यृगुत्तमा।
अपिस्त्वाग्निपमाशास्ते मानो रक्ष[ज] इति त्रृचि[७] ॥३१॥
दिवश्चैव पृथिव्याश्च तथा पालनमात्मनः।
उलूक यातुं[झ][८] जह्येतान्नानारूपान्निशाचरान्[९] ॥३२॥

---

(१) मण्डूका इन्द्रासोममिति ख० ङ० पुस्तकान्तरञ्च।
(२) राक्षोघ्नमिति क० घ० ङ० च०।
(३) एतच्छ्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु नेष्यते।
(४) सौम्याविति ङ०।
(५) त्र्यृचः इति ग०।
(६) यो मेतीन्द्रः स्तुतोऽर्द्धयेति ङ० पुस्तकान्तरञ्च।
(७) तृचे इति क० घ० च०।
(८) यात्विति क० ख० ग० घ० च०, यान्त्विति पुस्तकान्तरम्।
(९) एष श्लोकः क० घ० च० चिह्नितपुस्तकेषु नेष्यते।

---

(क) ऋ० ७, १०३, १। (ख) ऋ० ७, १०४, ८। (ग) ऋ० ७, १०४, १४। (घ) ऋ० ७, १०४, १६। (ङ) ऋ० ७, १०४, १७। (च) ऋ० ७, १०४, १८। (छ) ऋ० ७, १०४, १९। (ज) ऋ० ७, १०४, २३। (झ) ऋ० ७, १०४, २२।

पञ्चदश्यान्तु सूक्तस्याद्यायाष्टम्यां[1] चैवं वारुणिः ।
दुःखशोकपरीतात्मा शपते विलपन्निव ॥२३॥
हते पुत्रशते तस्मिन्[2] वसिष्ठो दुःखितस्तदा ।
रक्षोभूतेन शापात्तु सुदासेनेति नः श्रुतं[3] ॥२४॥
कण्वश्चैव प्रगाथश्च घोरपुत्रौ बभूवतुः ।
गुरुणा तावनुज्ञातावूषतुः सहितौ वने ॥२५॥
वसतोस्तु तयोस्तत्र कण्वपत्न्याः शिरःस्वपन्[4] ।
छत्वा कनीयान् कण्वस्योरूत्सङ्गावन्वबुध्यत[5] ॥२६॥
शप्तुकामस्तु तं कण्वः क्रुद्धः पापाभिशङ्कया ।
बोधयामास पादेन दिधक्षन्निव तेजसा ॥२७॥
विदित्वा तस्य तं भावं प्रगाथः प्राञ्जलिः स्थितः ।
मातृत्वे च पितृत्वे च वरयामास तावुभौ ॥२८॥
स घौरो[6] वाथ काण्वो वा वंशजैर्बहुभिः पितुः ।
ददर्शान्यैश्च सहितः स्वपिर्मण्डलमष्टमम् ॥२९॥

---

(१) षष्ठ्यामिति क० ग० घ० च० ।
(२) क्रुद्धः इवि ख० ङ० पुस्तकान्तरश्च ।
(३) वै श्रुतिरिति क० ग० घ० च० ।
(४) शिरःश्रमादिति क० घ० च० । शिरःस्वपदिति ख० ग० ।
(५) उत्सङ्गेनावबुध्यतेति क० घ० च० । कण्वस्तूरूत्सङ्गेन त्वबुध्यतेति ख० ङ० पुस्तकान्तरश्च ।
(६) घोरः इति क० ख० घ० च० ।

माचिदे[क]न्द्राणि चत्वारि अन्यस्य स्थूर[ख]मित्यृचि।
तुष्टावाङ्गिरसी नारी वसन्तौ[१] अश्वतौ[ग] पतिम् ॥४०॥
स्त्रियं मन्त्रं[२] पुमांसन्तमासङ्गः स्तुतवानृषिः[३]।
स्वस्य[४] दानं स्तुतौ[घ]त्यृग्भिस्त्रिभिः परिकीर्त्तितम् ॥४१॥
त्रिचे[ङ]त्यृग्भ्यां तु काण्वस्य विभिन्दोः परिकीर्त्तितम्।
पाकस्थाम्नस्तु[५] भोजस्य चतुर्भिर्यमिति[च] स्तुतम् ॥४२॥
पौष्णौ प्रेति[छ] प्रगाथौ द्वौ[६] मन्यते शाकटायनः।
ऐन्द्रमेवाथ पूर्वन्तु गालवः पौष्णमुत्तरम्[७] ॥४३॥
ऐन्द्राणामिह सूक्तानामुत्तमस्योत्तमे तृचे।
दानं राज्ञः कुरुङ्गस्य स्थूरं राध[ज] इति स्तुतं ॥४४॥
दूरा[झ]दित्याश्विने सूक्ते सप्तचिश्नत्तामे[ञ] यथा।

---

(१) वसन्ताविति ख०। वसताविति ङ०।
(२) त्वन्तमिति ग०।
(३) मासं तं स्तुतवानृषिरिति ङ० पुस्तकान्तरञ्च।
(४) तस्येति ख० ङ० पुस्तकान्तरञ्च।
(५) चेति ख० ङ०।
(६) त्विति ख० ङ० पुस्तकान्तरञ्च।
(७) उत्तममिति ङ०।

---

(क) ऋ० ८, १, १। (ख०) ऋ० ८, १, ३४। (ग) ऋ० ८, १, ३४।
(घ) ऋ० ८, १, ३०। (ङ) ऋ० ८, २, ४१। (च) ऋ० ८, ३, २१।
(छ) ऋ० ८, ४, १५। (ज) ऋ० ८, ४, १९। (झ) ऋ० ८, ५, १।
(ञ) ऋ० ८, ५, ३७।

पञ्चदश्यान्तु सूक्तस्याथाष्टम्यां[१] चैवं वारुणिः ।
दुःखशोकपरीतात्मा शपते विलपन्निव ॥२२॥
हते पुत्रशते तस्मिन्[२] वसिष्ठो दुःखितस्तदा ।
रक्षोभूतेन शापात्तु सुदासेनेति नः श्रुतं[३] ॥२४॥
कण्वस्यैव प्रगाथस्य घोरपुत्रौ बभूवतुः ।
गुरुणा तावनुज्ञातावूषतुः सहितौ वने ॥२५॥
वसतोस्तु तयोस्तत्र कण्वपत्न्याः शिरःस्वपन्[४] ।
कृत्वा कनीयान् कण्वस्योरुत्सङ्गावन्वबुध्यत[५] ॥२६॥
शप्तुकामस्तु तं कण्वः क्रुद्धः पापाभिशङ्कया ।
बोधयामास पादेन दिधक्षन्निव तेजसा ॥२७॥
विदित्वा तस्य तं भावं प्रगाथः प्राञ्जलिः स्थितः ।
मातृत्वे च पितृत्वे च वरयामास तावुभौ ॥२८॥
स घौरो[६] वाथ काण्वो वा वंशजैर्बहुभिः पितुः ।
ददर्शान्यैश्च सहितः चर्षिर्मण्डलमष्टमम् ॥२९॥

---

(१) षष्ठ्यामिति क० ग० घ० च० ।
(२) क्रुद्धः इति ख० ङ० पुस्तकान्तरञ्च ।
(३) वै श्रुतिरिति क० ग० घ० च० ।
(४) शिरःश्रमादिति क० घ० च० । शिरःस्वपदिति ख० ग० ।
(५) उत्सङ्गेनावबुध्यतेति क० घ० च० । कण्वस्योरुत्सङ्गेन त्वबुध्यतेति ख० ङ० पुस्तकान्तरञ्च ।
(६) घोरः इति क० ख० घ० च० ।

माचिदे(क)न्द्राणि चत्वारि स्वश्वस्य सूर(ख)मित्यृचि ।
तुष्टावाङ्गिरसी नारी वसन्तौ(१) प्रश्वतौ(ग) पतिम् ॥४०॥
स्त्रियं मन्त्वा(२) पुमांसन्तमासङ्गः स्तुतवानृषिः(३) ।
स्वस्य(४) दानं स्तुवी(घ)त्यृग्भिश्चतुर्भिः परिकीर्त्तितम् ॥४१॥
मित्रे(ङ)त्वृग्भ्यां तु काण्वस्य विभिन्दोः परिकीर्त्तितम् ।
पाकस्थामस्तु(५) भोजस्य चतुर्भिर्यमिति(च) स्तुतम् ॥४२॥
पौष्णौ प्रेति(छ) प्रगाथौ द्वौ(६) मन्यते शाकटायनः ।
ऐन्द्रमेवाद्य पूर्वन्तु गालवः पौष्णमुत्तरम्(७) ॥४३॥
ऐन्द्राणामिह सूक्तानामुत्तमस्योत्तमे त्वृचे ।
दानं राज्ञः कुरुङ्गस्य स्थूरं राध(ज) इति स्तुतं ॥४४॥
दूरा(झ)दित्याश्विने सूक्ते सप्तविंशत्तमे(ञ) यथा ।

(१) वसन्ताविति ग०। वसताविति ङ०।
(२) मन्तमिति ग०।
(३) मासं तं स्तुतवानृषिरिति ङ० पुस्तकान्तरे च।
(४) तस्येति ग० ङ० पुस्तकान्तरे च।
(५) चेति ख० ङ०।
(६) त्रिति ग० ङ० पुस्तकान्तरे च।
(७) उत्तममिति ग०।

(क) ऋ० ८, १, १। (ख) ऋ० ८, १, ३४। (ग) ऋ० ८, १, ३४।
(घ) ऋ० ८, १, ३०। (ङ) ऋ० ८, २, ४१। (च) ऋ० ८, ३, २१।
(छ) ऋ० ८, ४, १५। (ज) ऋ० ८, ४, १९। (झ) ऋ० ८, ५, १।
(ञ) ऋ० ८, ५, ३०।

तत्रार्द्धर्चा[१] द्वृच[२]स्त्वान्यः कणोदीनस्तवः स्तुतः ॥४५॥
महानितीो[क]न्द्रदैवत्यमग्निं वैश्वानरं स्तुतम्[३]।
मन्यते शाकपूणिस्तु भार्म्याश्व[४]श्चैव मुद्गलः ॥४६॥
द्वे तु शत[ख]मित्यस्मिन् दानं तैरिन्दिरं स्तुतम्।
परन्तु मारुतं प्रेति[ग] श्वान[घ]स्तीोया[ङ]श्विनानि च[५] ॥४७॥
त[च]माग्नेयं य इन्द्रे[छ]ति षडैन्द्राण्युत्तमस्य तु।
उपोत्तमायामर्द्धर्चे देवो वास्तोस्पतिः[ज] स्तुतः ॥४८॥
इद[झ]मादित्यदैवत्यं तिसृभिस्त्वदितिः[ञ] स्तुता[६]।
षष्ठ्यां चतुर्थीसप्तम्योरुते[ट]त्याश्विन्युगष्टमी[७] ॥४९॥
स्तुताः प्र[ठ]मिति पञ्चोस्या[८]मग्निसूर्यानिलास्त्रयः।

---

(१) इत्यर्द्धर्चः इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(२) द्वृचः इति क॰ घ॰ ङ॰ च॰।
(३) महानैन्द्रं प्रस्तवत्यामग्निर्वैश्वानरः स्तुतः इति क॰ ग॰ घ॰ च॰।
(४) भार्म्यश्वः इति ङ॰।
(५) स्ततः इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(६) तथेति क॰ ङ॰ पुस्तकान्तरञ्च।
(७) यथा चतुर्थी सप्तम्योरितेत्याश्विन्युगष्टमीति क॰ घ॰ च॰।
(८) पञ्चस्विति क॰ ग॰ घ॰ च॰।

---

(क) ऋ॰ ८, ६, १। (ख) ऋ॰ ८, ६, ४६। (ग) ऋ॰ ८, ७, १। (घ) ऋ॰ ८, ८, १। (ङ) ऋ॰ ८, ८, २३। (च) ऋ॰ ८, ११, १। (छ) ऋ॰ ८, १२, १। (ज) ऋ॰ ८, १७, १४। (झ) ऋ॰ ८, १८, १। (ञ) ऋ॰ ८, १८, ६। (ट) ऋ॰ ८, १८, ८। (ठ) ऋ॰ ८, १८, ९।

वरुणार्य्यमित्राणां प्रमाथोऽय[1]मिति श्रुतिः[2] ॥५०॥
आग्नेये श्रुती राजर्षेस्समदृश्योरदा[क]दिति ।
पश्चाद्गतं वधूनाञ्च गवां तिस्रश्च मरुतीः ॥५१॥
अश्वोष्ट्राणामुरभ्राणां वासांसि विविधानि च ।
रत्नानि वृषभं श्रावं तासामप्येश्वरं पतिम्[3] ॥५२॥
कृत्वा दारानृषिर्गच्छन्निन्द्रायैतच्छशंस च ।
वयं[ख] सूक्तेन शक्रस्य प्रीतस्तेन शचीपतिः ॥५३॥
ऋषे वरं वृणीष्वेति शक्रस्तमृषिरब्रवीत् ।
काकुत्स्थ कन्याः पञ्चाशद्युगपद्रमये प्रभो ॥५४॥
कामतो बहुरूपत्वे यौवने[4] चाक्षयो रतिं ।
शङ्खनिधिं पद्मनिधिं गृहेष्वनपायिनम्[5] ॥५५॥
प्रासादान् विश्वकर्म्मासौ सौवर्णांस्त्वप्रमादतः ।
करोतु पुष्पवाटीश्च पृथक्तासां सुरद्रुमैः ॥५६॥
मा भूत् सपत्नी स्पर्द्धासां सर्व्वमस्त्विति चाब्रवीत्[6] ।

(१) वरुणार्य्यमित्रास्तु प्रमाथेयमिति ख० ग० ।
(२) श्रुताः इति ख० घ० पुस्तकान्तरेषु, तदेति ग० ।
(३) ऋषे वरं वृणोति ख० ।
(४) युगपदिति घ० ।
(५) काकुत्स्थेत्यादिसार्द्धश्लोकः पुस्तकान्तरे न दृश्यते ।
(६) पश्चाद्गतं वधूनामित्यादि सर्व्वमस्त्विति चाब्रवीदित्यन्तपाठः क० ग० घ० ङ० चिह्नितपुस्तकेषु नेष्यते ।

(क) ऋ० ८, १९, ३६ । (ख) ऋ० ८, २१, १ ।

आगन्त(क) मारुतं सूक्तं वय(ख)मित्यैन्द्रमुत्तरम्[1] ॥५७॥
काण्वस्य सौभरे[2]श्चैव यजतो वंशजैः[3] सह।
कुरुक्षेत्रे यवान् जघ्नुर्देवीऽपि विविधानि च ॥५८॥
आखुश्च[4] सोऽभितुष्टाव इन्द्रश्चैनं सरस्वतीं।
इन्द्रो वे(ग)त्यनयर्चा स दानशक्तिं प्रकाशयन् ॥५९॥
आखुराजोऽभिमानाच्च प्रहर्षितमनाः स्वयम्[5]।
स स्तुतो[6] देववच्चैन(घ) ऋषये तु गवां ददौ[7] ॥६०॥
अयुतानां सहस्रं वै निर्जयाद्द स्तुवन्नृपिः।
ऋषिश्चोवाच[8] हृष्टात्मा नाहमर्हाम्यृषेः स्तुतिम् ॥६१॥
तिर्यग्योनौ समुत्पन्नो[9] देवतां[10] स्तोतुमर्हसि।

---

(१) वयमैन्द्रमतः परमिति ख॰ ङ॰ पुस्तकान्तरश्च।
(२) सौभरेरिति क॰ ग॰ घ॰ च॰।
(३) वङ्गैरिति क॰ घ॰ च॰।
(४) आखवः इति ख॰ ङ॰ पुस्तकान्तरश्च।
(५) इन्द्रोवेत्यनयर्चा स इति श्लोकः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नाभोक्यते।
(६) संस्तुत इति ख॰ ग॰ ङ॰ पुस्तकान्तरश्च।
(७) यद्ददौ तद्दृष्टेन चेति ङ॰ पुस्तकान्तरश्च।
(८) प्रोवाचेति ङ॰।
(९) समुद्भूत इति ख॰ ङ॰ पुस्तकान्तरश्च।
(१०) देवं नः इति ग॰।

---

(क) ऋ॰ ८, २०, १। (ख) ऋ॰ ८, २१, १। (ग) ऋ॰ ८, २१, १७।
(घ) ऋ॰ ८, २१, १८।

तमन्वया पुनस्तास्तौदोत्यं(क) सूक्तेन चाश्विनौ(१) ॥६२॥
इति(ख)श्वेत्येनदाग्नेयं सखायश्चैन्द्रमुत्तरम्(२) ।
यथा वरः सुषाम्णे (ग)उत्तमस्तौपयस्तुचः ॥६३॥
अष्टौ तु सहिता एता देवता बिभिदुर्बलम् ।
उषाश्चेन्द्रश्च सोमश्चाथाग्निः सूर्यो बृहस्पतिः ॥६४॥
अङ्गिराः सरमा चैव ता वा(घ)मित्युत्तरस्य तु ।
आदौ मैत्रावरुण्यस्तु(३) नव द्वादश तूत्तराः ॥६५॥
वैश्वदेव्यो वरुराजा यच्चाददृषये वसु ।
इन्द्रो वेत्येनयर्चा तु दानप्रक्षिप्रकाशनम्(४) ॥६६॥
कौर्त्तितं(५) तु तृचे तस्मिन्नृच(ङ)मुचथ्यायने ।
अश्विनौ ददतुः प्रीतौ तदिहोक्तं सुषामनि(६)(च) ॥६७॥

---

(१) स्तुत्वा चित्रं सूक्तैः परैस्त्रिभिरिति क० घ० च० ।
(२) उत्तममिति ख० एतच्छ्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु न पठितम्। तेषु अस्मिन् स्थले, अश्विनावग्निमिन्द्रञ्च चाभितुष्टाव देवताः। एतच्छ्लोकार्द्धं वर्त्तते ।
(३) मित्रावरुण्य इति ख० ङ० ।
(४) एतच्छ्लोकार्द्धं ख० ग०ङ० चिह्नितपुस्तकेषु नापठ्यत ।
(५) कीर्त्तनमिति ङ० पुस्तकान्तरञ्च ।
(६) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते ।

---

(क) ऋ० ८, २२, १ । (ख) ऋ० ८, २३, १ । (ग) ऋ० ८, २४, २८ । (घ) ऋ० ८, २५, १ । (ङ) ८, २५, २२ । (च) ऋ० ८, २५, २२ ।

आश्विनं तु युवो[क]र्युक्त[ख] वायव्या उत्तरास्तु याः ।
यं सवर्णमनुर्नाम लेभे पुत्रं विवस्वतः ॥६८॥
वैश्वदेवानि पञ्चैतान्यग्निरुक्थे[ग] जगाद सः[१] ।
बभ्रुरेक[घ] इति त्वस्मिंस्त्रिङ्गतो[२] द्विपदा दश ॥६९॥
स्तूयन्ते देवता ह्यासु कर्मभिः[३] स्वैः पृथक् पृथक् ।
स्तुताः कर्मगुणैः स्वैः स्वैर्देवता यत्र यत्र तु ॥७०॥
पृथक् कर्मस्तुतिर्नाम वैश्वदेवन्तदेव तु[४] ।
तासाम्बभ्रुरिति त्वाद्या सौम्याग्नेयौ त्वृगुत्तरा ॥७१॥
त्वाष्ट्री चैन्द्री च रौद्री च पौष्णी वैष्णव्यृगाश्विनी ।
नवमी मैत्रावरुण्यृग्दशमी मित्रसंस्तवा ॥७२॥
यजमानप्रभङ्गाश्च यजिरेवात्र संस्तुता ।
यो यजाति[ङ]द्वचे प्रक्तो यजतां पतिरीरितः ॥७३॥
तस्य द्युमान्[च] इत्यस्या चतसृष्वपि मन्त्रि[छ]ति ।

---

(१) वैश्वदेवानि सूक्तानि जगादाग्निरिति स्वयमिति क० घ० च० ।
(२) त्वेता त्रिङ्गतः इति ख० ग० ङ० पुस्तकान्तरञ्च ।
(३) ह्यासां नवभिरिति क० ग० च० ।
(४) पृथक् कर्म्मस्तुतेर्युक्तं तद्विद्याद्वैश्वदेवतमिति ख० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० ८, २६, १ । (ख) ऋ० ८, २६, २० । (ग) ऋ० ८, २७, १ । (घ) ऋ० ८, २९, १ । (ङ) ऋ० ८, ३१, १ । (च) ऋ० ८, ३१, ३ । (छ) ऋ० ८, ३१, १५ ।

यज्वनोरेव दम्पत्योः पञ्च या(क) दम्पतीत्यृचः ॥७४॥
आग्नेय्या(ख)ग्नेरैतु(ग) पौष्णौ परे मित्रार्य्यमा यथा(घ) ।
वरुणस्य सुतस्त्वच आदित्या अग्नि(ङ)मग्नये(१) ॥७५॥
सूक्तानि मह्नतानी(च)ति चोत्थैन्द्राणि पराणतः ।
अध(छ) इत्यत्र कन्या तं स्त्रीलिङ्गेनेन्द्रमब्रवीत् ॥७६॥
स हि तां कामयामास दानवीं पाकशासनः ।
ज्येष्ठां स्वसारं पुंसस्य(२) तस्यैव वधकाम्यया(३) ॥७७॥
अग्निने(ज)त्याश्विनं सूक्तमैन्द्रे सूक्ते परे ततः ।
ऐन्द्राग्न्यात् परमाग्नेयमैन्द्राग्न्यादारुणे(४) परे ॥७८॥
उत्तरे वरुणे लन्ध आ वा(झ)मित्याश्विनस्तृचः ।
सूक्ते इमे(ञ) समाग्नेये(५) ताभ्यामैन्द्रे ततः परे(६) ॥७९॥

---

(१) यो यज्ञाति वृचे यक इत्यादिसार्द्धश्लोकदयं क० ग० घ० च० चिह्नित-पुस्तकेषु नापश्यत ।

(२) पुंसस्येति क० घ० च०, कंसस्येति ख० पुस्तकान्तरच्च ।

(३) युवकाम्ययेति ख० ग० ङ० पुस्तकान्तरच्च ।

(४) ऐन्द्राग्नं परमाग्नेयमैन्द्राग्नं वारुणे इति क० घ० च० । वारुणे इत्यत्र वारुणमिति ग० ।

(५) इमे तु चाग्नेये इति क० घ० च० ।

(६) ताभ्य मैन्द्रेति चोत्तरे इति क० ग० घ० च० ।

---

(क) ऋ० ८, ३१, ५। (ख) ऋ० ८, ३१, १०। (ग) ऋ० ८, ३१, ११। (घ) ऋ० ८, ३१, १३। (ङ) ऋ० ८, ३१, १४। (च) ऋ० ८, ३२, १। (छ) ऋ० ८, ३३, १९। (ज) ऋ० ८, ३४, २। (झ) ऋ० ८, ४२, ४। (ञ) ऋ० ८, ४२, १।

वश्यायाख्याय(१)यत्(२)प्रादात्कानीतस्तु पृथुश्रवाः ।
तदत्र संस्तुतं दानमास(क) इत्येवमादिभिः(३) ॥८०॥
आ नः(ख) प्रगाथो वायव्यः सूक्तस्योपोत्तमा च या ।
मित्रार्य्यमणौ मरुतः सुषोमोध(ग)दृचे स्तुताः ॥८१॥
द्विचत्वारिंशकात्प्रीत(४) स्त्रिशोकाय पुरन्दरः ।
गिरिं निकृत्य वज्रेण गा ददावसुरैर्हृताः ॥८२॥
यः(घ) इन्द्रादिति चैतस्यामृषिस्तु स्वयमब्रवीत्(५) ।
स्तुता नवम्या त्वदितिर्मंहो(ङ)त्यादित्यदेवते(६) ॥८३॥
अन्याः पञ्चोपषेऽपि स्युः सौम्यं स्वादो(च)रिति स्तुतम् ।
पराण्यष्टौ तु(७) सूक्तानि ऋषीणां तिग्मतेजसाम् ॥८४॥

---

(१) वश्यापाख्यायेति घ० ।
(२) वश्यास्वाय वपदिति ख० ।
(३) स्वादिनेति ख० ङ० पुस्तकान्तरे च ।
(४) प्रातः इति ङ० पुस्तकान्तरे च ।
(५) मित्रार्य्यमाणौ मरुत इत्यादि ऋषिस्तु स्वयमब्रवीदित्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते ।
(६) चापीति क० घ० च० ।
(७) पराणि चाष्टाविति ख० ङ० पुस्तकान्तरे च ।

---

(क) ऋ० ८, ४६, २१ । (ख) ऋ० ८, ४६, २५ । (ग) ऋ० ८, ४६, ४ । (घ) ऋ० ८, ४६, २७ । (ङ) ऋ० ८, ४७, १ । (च) ऋ० ८, ४८, १ ।

ऐन्द्राण्यभि[क] तु षड्विंशः प्रगाथो बहुदेवतः।
अगन्न्वाग्नेरवेत्य[ख]ग्निः सूर्य्यमन्त्यपदा[१] जगौ[२] ॥८५॥
प्रस्कण्वश्च पृषध्रय[३] प्रादाद्यदसु किञ्चन।
तद्भूरी[ग]दिति सूक्ताभ्यामखिलन्त्विह संस्तुतम्[४] ॥८६॥
ऐन्द्राण्युभय[घ]मित्यत्र षडाग्नेयात् पराणि तु[५]।
निपातभाक्[६] देवानां दाता स[ङ] इति भागुरिः ॥८७॥
तृचे[७]यास्कस्त्वन्त्येतं[८] मन्यते वैश्वदेवतं।
आदित्यदेवतं सूक्तं त्याग्नि[च]त्यत्र परन्तु यत् ॥८८॥
धीवराः सहसा मीनान् दृष्ट्वा सारस्वते जले।

---

(१) अन्त्यं पदमिति ङ० पुस्तकान्तरञ्च।
(२) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते। तेषु अस्मिन् स्थले, अन्वेत्यग्निरिति तस्यास्ततोऽग्निः सूर्य्यं एव तु। इति श्लोकार्द्धमस्ति।
(३) त्विति ङ०।
(४) सङ्कीर्त्तितमिति ख० ङ० पुस्तकान्तरञ्च।
(५) श्लोकार्द्धमेतत् ख० ङ० चिह्नितपुस्तकयोर्न विद्यते।
(६) निपातानाञ्चेति ख०, निपातेनेहेति ङ० पुस्तकान्तरञ्च।
(७) ऋचमिति ग०।
(८) यास्कोऽस्कोऽर्द्धं तृचं चैनमिति ङ०।

---

(क) ऋ० ८, ४६, १। (ख) ऋ० ८, ५६, ५। (ग) ऋ० ८, ५५, १। (घ) ऋ० ८, ६१, १। (ङ) ऋ० ८, ६५, १०। (च) ऋ० ८, ६७, १।

जालं प्रक्षिप्य तान् बद्धोदक्षिपन् सलिलात् स्थलम् ॥८९॥
शरीरपातभीतास्ते तुष्टुवुश्चादितेः सुतान्।
मुमुचुस्तांस्ततस्ते च प्रसन्नास्तान् समूदिरे ॥९०॥
धीवराः क्षुद्भयं मा वो भूत्स्वर्गं प्राप्स्यथेति च[१]।
उते[क]ति माता चैवैषां तृचेनाभिष्टुतादितिः ॥९१॥
मातृत्वाद्गर्भसम्बन्धात्[२] स्तूयेतैषां[२] स्तुतौ स्तुतौ।
ऐन्द्राण्या त्वा रथं[ख] चौणि स्तौत्यृद्वनुपमे[ग]ति षट् ॥९२॥
आर्चाश्वमेधयोरच पञ्चदानस्तुतिः परा।
अपा[घ]दिन्द्रस्य चाग्नेश्च विश्वेषां चैव संस्तवः ॥९३॥
तृचस्य प्रथमोऽर्द्धर्चः शेषा वरुणदेवताः[४]।
त्व[ङ]माग्नेयेऽथ वा सूक्ते उत्तरे[५] हविषां स्तुतिः॥९४॥
पयःपश्वोषधीनाञ्च[६] तथा रूपं हि दृश्यते।

---

(१) धीवराः सहसा मीनानित्यादि सार्द्धश्लोकद्वयं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नामध्यत।
(२) मातृत्वादतिसम्बन्धादिति क॰ च॰, मातृत्वादभिसम्बन्धादिति ग॰ मातृत्वादिति सम्बन्धादिति घ॰।
(३) सुवन्त्येनामिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(४) शेषो वरुणदैवत इति ख॰ ग॰ ङ॰।
(५) स्वाहमुत्तरमिति क॰ ग॰ घ॰ च॰।
(६) चेति ख॰ ङ॰।

---

(क) ऋ॰ ८, ६७, १०। (ख) ऋ॰ ८, ६८, १। (ग) ऋ॰ ८, ६८, १४। (घ) ऋ॰ ८, ६९, ११। (ङ) ऋ॰ ८, ७१, १।

उ[क]दित्याश्विनमाग्नेये परे सूक्ते विश्वो विप्रः[ख] ॥९५॥
स्वग्न्यामह[ग]मिति द्वाभ्यां स्तौत्यात्मानमृषिः स्वयम् ।
आत्मानमात्मना स्तुत्वा स्तौति दानं श्रुतर्वणः ॥९६॥
आत्मादानाभिसम्बन्धात् परुष्णीञ्च महानदीम्[१] ।
परुष्णीं परया चेन्द्रं[२] त्रिभिः सूक्तैरिम[घ]न्विति ॥९७॥
सौम्यस्य त्वय[ङ]मित्यस्य पराण्यैन्द्राणि यानि तु ।
नह्यी[च]ति तेषां प्रथमे[३] वैश्वदेव्यृगवीवृधत्[छ] ॥९८॥
देवाना[ज]मिति देवानामग्नेह[झ]माग्नेयमुत्तरम्[४] ।
त्रीण्याश्विनानि सूक्तानि आ मे[ञ]ऐन्द्राणि तं[ट] तथा[५] ॥९९॥
अपालाऽत्रिसुता त्वासीत्कन्या त्वग्दोषिणी पुरा ।
तामिन्द्रश्चकमे दृष्ट्वा[६] विजने पितुराश्रमे ॥१००॥

---

(१) आत्मानमात्मना स्तुत्वेत्यादि परुष्णीञ्च महानदीमित्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न पठितः ।
(२) परया परुष्णीमिन्द्रमिति क० ग० घ० च० ।
(३) प्रथममिति ख० पुस्तकान्तरञ्च ।
(४) आग्नेयन्तु ततः परमिति क० घ० च० ।
(५) आम इति ऐन्द्राणि तमितीति चेति क० ग० घ० च० ।
(६) दृष्ट्वेति क० घ० च० ।

---

(क) ऋ० ८, ७३, १ । (ख) ऋ० ८, ७४, १ । (ग) ऋ० ८, ७४, १३ । (घ) ऋ० ८, ७६, १ । (ङ) ऋ० ८, ७९, १ । (च) ऋ० ८, ८०, १ । (छ) ऋ० ८, ८०, १० । (ज) ऋ० ८, ८३, १ । (झ) ऋ० ८, ८४, १ । (ञ) ऋ० ८, ८५, १ । (ट) ऋ० ८, ८८, १ ।

तपसा बुबुधे सा तु सर्व्वमिन्द्रचिकीर्षितम् ।
उदकुम्भं समादाय अपामर्थं जगाम सा[1] ॥१०१॥
दृष्ट्वा सोममपादास्ये तुष्टावर्चा वने तु तं ।
कन्या वा[क]रिति चैतस्यासेषोऽर्थः कथितः स्तुतः[2] ॥१०२॥
सा सुषाव मुखात् सोमं स्तुत्वेन्द्रश्चाजुहाव तं[3] ।
असौ य एषी[ख]त्यनया पपाविन्द्रस्तु तन्मुखात्[4] ॥१०३॥
अपूपांश्चैव सक्तूंश्च भक्षयित्वा तु तद्गृहात्[5] ।
स्वग्निस्तुष्टाव सा चेनं जगादैनं द्वचेन तु[6] ॥१०४॥
सुलोमामनवद्याङ्गीं कुरु मां शक्र सुत्वचां ।
तस्यास्तद्वचनं श्रुत्वा प्रीतस्तेन पुरन्दरः[7] ॥१०५॥
रथच्छिद्रेण तामिन्द्रः शकटस्य युगस्य च ।

---

(१) क० ग० घ० च० चिह्नितपुस्तकेषु उदकुम्भं समादायेति श्लोकार्द्धं, अपूपांश्चैव सक्तूंश्चेति श्लोकार्द्धात्परतः पठितम् ।
(२) दृष्ट्वासोममपादास्ये इत्यादि एषोऽर्थः कथितः स्तुतः इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तके नोपलभ्यते ।
(३) पपाविन्द्रस्तु तन्मुखादिति क० ग० घ० च० ।
(४) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते ।
(५) प्रतग्रनुरिति ख० ङ० पुस्तकान्तरयं ।
(६) असौ भूते दृपेन सेति ङ० पुस्तकान्तरयं ।
(७) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते ।

---

(क) ऋ० ८, ९१, १ । (ख) ऋ० ८, ९१, २ ।

प्रविश्य निष्कर्षं त्रिः सुत्वक् सा तु ततोऽभवत्[१] ॥१०६॥
तस्यां त्वचि व्यपेतायां पूर्वस्यां शल्यको[२]ऽभवत्।
उत्तरा त्वभवद्गोधा कृकलासस्त्वथोत्तमा ॥१०७॥
इतिहासमिमं[३] सूक्ते त्वाहतुर्यास्कमाठरौ[४]।
कन्ये[क]ति शौनकः सूक्ते यान्त[ख]मैन्द्रे ततः परे[५] ॥१०८॥
उत्तमा चार्भवी प्रोक्ता उत्तरस्त्वैतरेयके।
छान्दोगिके तृतीये तदार्भवं शस्यते यतः[६] ॥१०९॥
मारुतं गौः[ग] परं सूक्तमा त्वै[घ]न्द्राणि[७] पराणि षट्।
सूक्ते द्वितीय एतेषामितिहासं प्रचक्षते[८] ॥११०॥

---

(१) ततः सा सुत्वचाभवदिति ङ॰ पुस्तकान्तरञ्च।

(२) तस्यास्त्वगपवृतायाः पूर्व्वा सा शल्यकः इति क॰ ग॰ घ॰ च॰।

(३) इदमिति क॰ ग॰ घ॰ च॰।

(४) यास्कभागुरिरिति क॰ ग॰ घ॰ च॰ यास्कगालवाविति ङ॰ पुस्तकान्तरञ्च।

(५) शौनकस्त्वैन्द्रं यान्तमित्युत्तरे च ये इति क॰।

(६) उत्तमा चार्भवीत्यादिश्लोकः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नास्त्यत।

(७) त्वास्त्वैन्द्राणीति क॰ ग॰ घ॰ च॰।

(८) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नेष्यते।

---

(क) ऋ॰ ८, ९१, १। (ख) ऋ॰ ८, ९२, १। (ग) ऋ॰ ८, ९४, १। (घ) ऋ॰ ८, ९५, १।

तपसा बुबुधे सा तु सर्व्वमिन्द्रचिकीर्षितम् ।
उदकुम्भं समादाय अपामर्घं जगाम सा[(१)] ॥१०१॥
दृष्ट्वा सोममपादास्ये तुष्टावर्चा वने तु तं।
कन्या वा[(क)]रिति चैतस्मामेषोऽर्थं कथितं स्तुत[(२)] ॥१०२॥
सा सुषाव मुखात् सोमं सुलेन्द्रश्चाजुहाव तं[(३)]।
असौ य एषी[(ख)]त्यनया पपाविन्द्रस्तु तन्मुखात्[(४)] ॥१०३॥
अपूपाद्येव सक्तूंश्च भक्षयित्वा तु तद्गृहात्[(५)] ।
ऋग्भिस्तुष्टाव सा चैनं जगादैनं ऋचेन तु[(६)] ॥१०४॥
सुलोमामनवद्याङ्गीं कुरु मां शक्र सुत्वचाम्।
तस्यास्तद्वचनं श्रुत्वा प्रीतस्तेन पुरन्दर[(७)] ॥१०५॥
रथच्छिद्रेण तामिन्द्र शकटस्य युगस्य च।

(१) क० ग० घ० च० चिह्नितपुस्तकेषु उदकुम्भं समादायेति श्लोकार्द्धं, अपूपाद्येव सक्तूंश्चेति श्लोकार्द्धात्परतः पठितम्।
(२) दृष्ट्वासोममपादास्ये इत्यादि एषोऽर्थं कथितः स्तुत इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तके नोपलभ्यते।
(३) पपाविन्द्रस्तु तन्मुखादिति क० ग० घ० च०।
(४) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते।
(५) शतक्रतुरिति ख० ङ० पुस्तकान्तरच।
(६) असौ ब्रूते दृचेन सेति ङ० पुस्तकान्तरच।
(७) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते।

(क) ऋ० ८, ९१, १। (ख) ऋ० ८, ९१, २।

इयाय देवानायन्तं[1] तं पशुर्विधिवत्सुराः ।
जघ्नुः पीत्वा च दैत्यानां समरे[2] नवतीर्नव ॥११६॥
तदेतदप्यवद्रप्स[3](क)स्तृचे सर्व्वं निगद्यते ।
तृचस्य देवतां तस्य[4] इन्द्रमेवाह शौनकः ॥११७॥
ऐन्द्राबार्हस्पत्य उक्ता ब्राह्मणे तैत्तरेयके[5] ।
तृचेनेन्द्रमपश्यन् तं [6]नेमोऽन्य(ख)मिति भार्गवः ॥११८॥
तुष्टाविन्द्रो वृचेनाथ(ग)मन्त्रं पश्य च मारुषे ।
स हि स्तुवन्नेव एको नेन्द्रा[7] अस्तीति चाब्रवीत् ॥११९॥
तदाकर्ण्येन्द्र आत्मानमृग्भ्यां तुष्टाव दर्शयन्[8] ।

---

(१) ध्यादायेति क॰ ग॰ घ॰ च॰ ।
(२) इतरा इति क॰ घ॰ च॰ ।
(३) तदेतदपि यतस्मिन्निति क॰ ग॰ घ॰ ।
(४) देवता ह्येता इति ख॰ ग॰ घ॰ पुस्तकान्तरच ।
(५) श्लोकार्द्धमेतत् क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते ।
(६) अदृश्यन्तमिति क॰ घ॰ च॰,ऐन्द्रमपश्यन् तमिति घ॰ पुस्तकान्तरच ।
(७) इन्द्र' इति पाठः साधुः ।
(८) स हि स्तुवन्नेव एक इत्यादि ऋग्भ्यां तुष्टाव दर्शयन्नित्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न पठितः ।

---

(क) ऋ॰ ८, ८६, १३। (ख) ऋ॰ ८, १००, ३। (ग) ऋ॰ ८, १००, ४।

अपक्रम्य तु[१] देवेभ्यः सोमो वृत्रभयार्दितः।
नदीमंशुमतीनाम्नीमभ्यतिष्ठत् कुरून्[२] प्रति ॥११११॥
तं वृहस्पतिरेकेन अभ्ययाद्[३]वृत्रहा सह।
योत्स्यमानः सुसंहृष्टै[४]र्मरुद्भिर्विविधायुधैः ॥११२॥
दृष्ट्वा तानायतः सोमः स्वबलेन व्यवस्थितः।
मन्वानो वृत्रमायान्तं[५] जिघांसुमरिसेनया ॥११३॥
व्यवस्थितं धनुष्मन्तं तमुवाच वृहस्पतिः।
मरुत्पतिरयं सोम एहि[६] देवान्[७] पुनर्विभो ॥११४॥
श्रुत्वा देवगुरोर्वाक्यमनघं वृत्रशङ्कया[८]।
सोऽब्रवीन्नेति तं शक्र ओजसैव[९] बलाद्बली ॥११५॥

---

(१) व्यपचक्रामेति ख० ङ० पुस्तकान्तरञ्च।
(२) अंशुमतीं नामा अत्यतिष्ठद्गुरूनिति क० ग० घ० च०, अभ्यतिष्ठत् कुरूनिति ख० ङ०।
(३) अभ्ययादिति पाठः साधुः। वृत्रान्वयादिति ङ० पुस्तकान्तरञ्च।
(४) योत्स्यमानस्य संहृष्टैरिति क० घ० च०।
(५) दृष्ट्वा तानायतांस्सोमं स्वबलेन व्यवस्थितम्। मन्वानं वृत्रमायान्तमिति क० घ० च०।
(६) मरुत्पतिरयं सोममेहीति क० ग० घ० च०।
(७) देवेति पाठः समीचीनः।
(८) श्लोकार्द्धमेतत् क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते।
(९) स्वर्ग एवेति क० घ० च०।

मैत्रावरुण्यः सूक्तायास्ततस्त्वृध[क]गित्यृचः ॥१२५॥
प्रे[ख]ति मित्राय वा पादास्त्वार्यम्णो(१) वरुणस्य च।
नय[ग]स्त्वतुर्थः सर्वेषामादित्यानामिति स्तुतिः ॥१२६॥
परा त्वादित्यदेवत्या(२) आम[घ] इत्याश्विनो द्वृचः(३)।
वायव्ये चोत्तरे सौर्य्ये औषसी तृगियं[ङ] परा(४) ॥१२७॥
पावमानी प्रजा ह्ये[च]ति माते[छ]त्यृग्भ्यान्तु गौः स्तुता।
त्वमग्ने बृह[ज]दाग्नेये परेऽग्निस्तृचि संस्तुतः ॥१२८॥
मरुद्भिः सह रुद्रैश्च आग्ने याही[झ]ति मध्यमः।
प्रजा ह्ये[ञ]त्यपि वार्द्धे प्रथमेऽग्निरिहोच्यते ॥१२९॥
पादे तृतीये आदित्य स्तुरीये मध्यमः स्तुतः।

---

(१) मित्राय पादश्च आर्य्यम्णः इति क० ख० ग० घ०।
(२) अत्र चादित्यदेवत्या इति ङ० पुस्तकान्तरञ्च।
(३) द्युचः इति ग०।
(४) सौर्य्ये औषस्या प्रभा वा चन्द्रसूर्य्ययोरिति ख० ङ० पुस्तकान्तरञ्च। औषस्या इत्यत्र उषसेति ग०।

---

(क) ऋ० ८, १०१, १। (ख) ऋ० ८, १०१, ५। (ग) ऋ० ८, १०१, ७। (घ) ऋ० ८, १०१, ८। (ङ) ऋ० ८, १०१, १३। (च) ऋ० ८, १०१, १४। (छ) ऋ० ८, १०१, १५। (ज) ऋ० ८, १०२, १। (झ) ऋ० ८, १०२, १३। (ञ) ऋ० ८, १०२, १४।

ऋषिस्तु दृष्ट्वा[1] सुप्रीतो विश्वेत्तात[क]इति तृचे ॥१२०॥
विविधानि च कर्म्माणि दानमैन्द्रञ्च शंसति ।
मनोजवा[ख]स्तु सौपर्णी[2] समुद्रे[ग] वज्रसंस्तवः ॥१२१॥
वाचं सर्व्वगतां देवीं[घ] स्तौति यद्वा[ङ]गिति तृचे ।
त्रींल्लोकानभितष्ठेमान्[3] वृत्रस्तस्थौ स्वयं त्विषा ॥१२२॥
तं नाशकं हन्तुमिन्द्रो विष्णुमभ्येत्य सोऽब्रवीत् ।
वृत्रं हनिष्ये तिष्ठस्व विक्रम्याद्य[4] ममान्तिके ॥१२३॥
उद्यतस्य तु[5] वज्रस्य द्यौर्ददातु[6] ममान्तरम् ।
तथेति विष्णुस्तच्चक्रे द्यौश्चास्य विवरन्ददौ ॥१२४॥
तदेतदखिलं प्रोक्तं विष्णाविति सखे[च]तृचि[7] ।

---

(१) तं दृष्ट्वर्षिस्त्विति ख० ङ० पुस्तकान्तरञ्च ।
(२) सौवर्णीति ख० ङ० ।
(३) अभितस्थेमानिति ख० ङ० पुस्तकान्तरञ्च ।
(४) वृत्रं हनाव विक्रम्य तिष्ठस्वाद्येति ख० ङ० पुस्तकान्तरञ्च ।
(५) उद्यतस्यैवेति क० घ० च० ।
(६) दद्यात्विति क० घ० च० ।
(७) सर्व्वमपिप्रोक्तं सखेत्यृचीति क० ग० घ० च० ।

---

(क) ऋ० ८, १००, ६ । (ख) ऋ० ८, १००, ८ । (ग) ऋ० ८, १००, ९ । (घ) ऋ० ८, १००, ११ । (ङ) ऋ० ८, १००, १० । (च) ऋ० ८, १००, १२ ।

मैत्रावरुण्यः सूक्ताद्यास्तत्सस्तृध(क)गित्यृचः ॥२२५॥
प्रे(ख)ति मित्राय वा पादास्त्वार्य्यम्णो(१) वरुणस्य च।
नय(ग)श्चतुर्थः सर्वेषामादित्यानामिति स्तुतिः ॥१२६॥
परा त्वादित्यदेवत्या(२) आम(घ) इत्याश्विनो त्वृचः(३)।
वायव्ये चोत्तरे सौर्य्ये औषसी त्वृगियं(ङ) परा(४) ॥१२७॥
पावमानी प्रजा ह्ये(च)ति माते(छ)त्यृग्भ्यान्तु गौः स्तुता।
त्वमग्ने बृह(ज)दाग्नेये परेऽग्निस्त्वृचि संस्तुतः ॥१२८॥
मरुद्भिः सह रुद्रैश्च आग्ने याह्यी(झ)ति मध्यमः।
प्रजा ह्ये(ञ)त्यपि वाद्भूर्वं प्रथमेऽग्निरिहोच्यते ॥१२९॥
पादे तृतीये आदित्य स्तुरीये मध्यमः स्तुतः।

---

(१) मित्राय पादश्च अर्य्यम्णः इति क॰ ख॰ ग॰ घ॰।
(२) ऋच आदित्यदेवत्या इति ङ॰ पुस्तकान्तरञ्च।
(३) तृचः इति ग॰।
(४) सौर्य्यं चौषस्या प्रभा वा चन्द्रसूर्य्ययोरिति ख॰ ङ॰ पुस्तकान्तरञ्च। चौषस्या इत्यत्र उषसेति ग॰।

---

(क) ऋ॰ ८, १०१, १। (ख) ऋ॰ ८, १०१, ५। (ग) ऋ॰ ८, १०१, ४। (घ) ऋ॰ ८, १०१, ७। (ङ) ऋ॰ ८, १०१, १३। (च) ऋ॰ ८, १०१, १४। (छ) ऋ॰ ८, १०१, १५। (ज) ऋ॰ ८, १०२, १। (झ) ऋ॰ ८, १०२, १४। (ञ) ऋ॰ ८, १०२, १४।

रहस्ये ब्राह्मणेऽप्येवं व्याख्यातं ह्यैतरेयके[१] ॥१२०॥
पावमानः स्तुतः सोमो नवमे त्विह मण्डले[२]।
पवमानवदाप्यस्तु[३] समिद्ध (क)इति संस्तुतः ॥१२१॥
अग्न आयूंषी(ख)ति चास्तु तिसृष्वग्निर्निपातभाक्।
अविता न(ग) इति त्वस्मिंस्तृचे पूषा[४] सह स्तुतः ॥१२२॥
आग्नेय्यौ द्वे ऋचावच यत्त (घ)इत्युत्तरे ततः।
उभाभ्या(ङ)मिति सावित्री अग्निसावित्र्य[५]गुत्तरा ॥१२३॥
पुनन्तु मां(च) वैश्वदेवी आग्नेयी त्वगुपप्रियम्(छ)।
षडुत्तरा[६] य(ज) इत्यच[७] स्वाध्यायाध्येतृसंस्तवः ॥१२४॥

---

(१) प्रजा ह्येत्यपि वाऽर्द्धर्चे इत्यादिसार्द्धश्लोकः क॰ ग॰ घ॰ च॰ चिह्नित॰ पुस्तकेषु न विद्यते।
(२) नवमे मण्डलेऽर्षिभिरिति क॰ घ॰ च॰, मण्डलर्षिभिरिति ग॰।
(३) पवमानवदाप्तीयः इति ख॰।
(४) पूषेति ख॰ ङ॰ पुस्तकान्तरञ्च।
(५) चाग्न्यासावित्रीति ख॰।
(६) सप्तोत्तराः इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(७) उत्तरे च य इत्येवीति ग॰।

---

(क) ऋ॰ ९, ५, १। (ख) ऋ॰ ९, ६६, १९। (ग) ऋ॰ ९,६७,२०।
(घ) ऋ॰ ९, ६७, २३। (ङ) ऋ॰ ९, ६७, २५। (च) ऋ॰ ९, ६७,२७।
(छ) ऋ॰ ९, ६७, २९। (ज) ऋ॰ ९, ६७, ३१।

सूक्ते निरुक्ते सक्ते[क]ऽग्नि रक्षोहा घर्मसंस्तवः[1] ।
सूर्यवर्चात्मवर्चाश्च[2] पवित्र[ख]मिति चोच्यते ॥१२५॥
आर्भवस्तु भवेत्पाद ऋभुर्धीर[ग] इति स्तुतः ।
निपातैस्तु त्रिभिः पादैस्त्रयो देवा इहोदिताः[3] ॥१२६॥
ब्रह्मा देवानां तिस्रोकास्त्रिभिस्त्वेतैर्हृचैर्ऋचैः[4] ।
सूर्यवर्चात्मवर्चाश्च[5] स्तूयते सोम[घ] इत्यपि[6] ॥१२७॥
अनाहार्यां तु वर्त्तन्यां पप्रच्छर्षीञ्छचीपतिः ।
काले दुर्गे महत्यस्मिन् कर्मणा केन जीव्यथ ॥१२८॥
शकटं शाकिनी गावः क्षुपिरस्यन्दनं वनं[7] ।
समुद्रः पर्व्वतो राजा एवं जीवामहे वयम् ॥१२९॥
अथ स्तुवन्[8] शशंसास्य ऋषिराङ्गिरसः शिशुः ।

---

(१) एतच्छ्लोकार्द्धं ङ० चिह्नितपुस्तके न पठितम् ।
(२) सूर्य्यवर्चात्मवर्चापीति क० घ० च० ।
(३) एष श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु नेक्ष्यते ।
(४) इहादृचैरिति क० ग० घ० च० ।
(५) सूर्य्यवर्चात्मवर्चापीति क० घ० च० ।
(६) एव वेति क० ग० घ० च० ।
(७) क्षरस्य नन्दनन्दनमिति ख०। एष श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु नापद्यत ।
(८) स्तुवन्नेवेति क० ग० घ० च० ।

---

(क) ऋ० ९, ७३, १। (ख) ऋ० ९, ८३, १। (ग) ऋ० ९, ८९, २। (घ) ऋ० ९, १०७, ७।

रहस्ये ब्राह्मणेऽप्येवं व्याख्यातं ह्यैतरेयके[1] ॥१२०॥
पावमानः स्तुतः सोमो नवमे लिह मण्डले[2]।
पवमानवदाप्युक्तु[3] समिद्ध [क]इति संस्तुतः ॥१२१॥
अग्न आयूंषी[ख]ति यासु तिसृष्वग्निर्निपातभाक्।
अविता न[ग] इति त्वस्मिंस्तृचे पूष्णा[4] सह स्तुतः॥१२२॥
आग्नेय्यौ द्वे स्वधावन्न यत्त [घ]इत्युत्तरे ततः।
उभाभ्या[ङ]मिति सावित्री अग्निसावित्र्य[5]गुत्तरा ॥१२३॥
पुनन्तु मां[च] वैश्वदेवी आग्नेयी त्वगुपप्रियम्[छ]।
षडुत्तरा[6] य[ज] इत्यत्र[7] स्वाध्यायाध्येतृसंस्तवः ॥१२४॥

---

(१) प्रजा ह्येव्यपि वार्द्धर्चे इत्यादिसार्द्धश्लोकः क० ग० घ० च० चिह्नित-पुस्तकेषु न विद्यते।
(२) नवमे मण्डलेऽर्पिभिरिति क० घ० च०, मण्डलर्षिभिरिति ग०।
(३) पवमानवदाग्नेयः इति ख०।
(४) पूषेति ख० ङ० पुस्तकान्तरञ्च।
(५) चान्याससावित्रीति ख०।
(६) सप्तोत्तराः इति ख० ङ० पुस्तकान्तरञ्च।
(७) उत्तरे च य इत्येवेति ग०।

---

(क) ऋ० ९, ५, १। (ख) ऋ० ९, ६६, १९। (ग) ऋ० ९,६७,२०।
(घ) ऋ० ९, ६७, २३। (ङ) ऋ० ९, ६७, २५। (च) ऋ० ९, ६७,२७।
(छ) ऋ० ९, ६७, २९। (ज) ऋ० ९, ६७, ३१।

सूक्ते निरुक्ते सक्ते[क]ऽग्निं रचोहा घर्म्मसंस्तवः[१] ।
सूर्य्यवद्यात्मवद्याच[१] पवित्रं[ख]मिति चोच्यते ॥१२५॥
आर्भवस्तु भवेत्पाद् ऋभुर्धीर[ग] इति स्मृतः ।
निपातैस्तु त्रिभिः पादैस्त्रयो देवा इहोदिताः[२] ॥१२६॥
ब्रह्मा देवानां तिस्रोकास्त्रिभिस्तैर्हुचैश्च चैः[३] ।
सूर्य्यवद्यात्मवद्यायं[४] स्तूयते सोम[घ] इत्यपि[५] ॥१२७॥
अनावृष्ट्यां तु वर्त्तन्त्यां पप्रच्छर्षीञ्छचीपतिः ।
काले दुर्गे महत्यस्मिन् कर्म्मणा केन जीव्यथ ॥१२८॥
शकटं शाकिनी गावः क्षुपिरस्यन्दनं वनं[७] ।
समुद्रः पर्व्वतो राजा एवं जीवामहे वयम् ॥१२९॥
अथ स्तुवन्[८] शशंसास्य ऋषिराङ्गिरसः शिशुः ।

(१) एतच्छ्लोकार्द्धं ङ० चिह्नितपुस्तके न पठितम् ।
(२) सूर्य्यवर्चात्मवर्चापीति क० घ० च० ।
(३) एष श्लोक क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते ।
(४) हृचाहृचैरिति क० ग० घ० च० ।
(५) सूर्य्यवर्चात्मवर्चापीति क० घ० च० ।
(६) एव चेति क० ग० घ० च० ।
(७) ऋदरस्य नन्दनन्दनमिति ख० । एष श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु नापठ्यत ।
(८) स्तुवन्नेवेति क० ग० घ० च० ।

(क) ऋ० ३, ७३, २ । (ख) ऋ० ९, ८३, १ । (ग) ऋ० ९, ८७, ३ । (घ) ऋ० ९, १०७, ७ ।

नानानीयेन[क] सूक्तेन ऋषीणामेव[१] सन्निधौ ॥१४०॥
तानिन्द्रः प्राब्रवीत् सर्व्वां[२]स्तपध्वं सुमहत्तपः ।
नातप्ततपसः शक्यमिदं[३] कृत्स्नं व्यपोहितुं ॥१४१॥
अथ ते वै तपस्तेपुः सर्व्वे स्वर्गजिगीषवः ।
ततस्ते तपसोग्रेण पावमानीर्ददृशुर्ऋचोऽब्रुवन् ॥१४२॥
अनसूयुरधीयानः शुश्रूषुस्तपसान्वितः ।
दश पूर्व्वापरान् वंश्यान् पुनात्यात्मानमेव च ॥१४३॥
पापं यच्चा[४]करोत्किञ्चिन्मनोवाग्देहभोजनैः[५] ।
पूतः स तस्मात् सर्व्वस्मात् स्वाध्यायफलमश्नुते[६] ॥१४४॥
पावमान्यः परं ब्रह्म शुक्रं ज्योतिः सनातनं[७] ।
गायत्र्योऽन्तोऽत्र यत्रासां प्राणानायम्य तन्मनाः[८] ॥१४५॥
पावमानं पितॄन् देवान् ध्यायेद्यश्च सरस्वतीम् ।

---

(१) इवेति ख० ङ० पुस्तकान्तरच ।

(२) स्ताह सर्व्वास्त्विति क० ग० घ० च० ।

(३) न ह्येतत्तपसा शक्यं विनेति क० ग० घ० च० ।

(४) यच्चेति ख० ङ० पुस्तकान्तरच ।

(५) मनोवाग्देहदो जनैरिति क० घ० च०, मनोवाग्देहतो जनैरिति ग० ।

(६) ऋषिसालोक्यमाप्नुयादिति ख० ङ० पुस्तकान्तरच ।

(७) ज्योतिस्सनातनमिति क० घ० च० ।

(८) एष श्लोकः ख० ङ० पुस्तकयोर्न विद्यते ।

---

(क) ऋ० ८, ११२, १ ।

पितॄंस्तस्योपवर्तेत(१) चीरं सर्पिर्मधूदकम् ॥१४६॥
एतत् सूक्तं शतं सौम्यं मण्डलं सचतुर्दशम्।
पावमान(२)मिति ख्यातमनुवाकास्तु सप्त वै(३) ॥१४७॥
सप्ताग्नेयानि सूक्तानि ददर्शाप इति चितः।
प्रकेतुने(क)ति त्वाष्ट्रस्तु त्रिशिराः सूक्तमुत्तरम् ॥१४८॥
ध्रुवस्तस्य(४) पञ्चाग्नेय्यस्तृचस्तस्थे(ख)ति(५) यः परः।
तेनेन्द्रमभितुष्टाव स्वप्नान्त इति नः(६) श्रुतिः ॥१४९॥
अभवत्स त्वि(७) देवानां पुरोधाः प्रियकाम्यया(८)।
असुराणां स्वसुः पुत्रस्त्रिशिरा विश्वरूपधृत् ॥१५०॥
तमृषिं प्रहित(९)न्त्विन्द्रो देवेषु बुबुधेऽसुरैः।

---

(१) उपतिष्ठेतेति ङ० पुस्तकान्तरे च।
(२) वीभमात्रमिति ख०।
(३) एष श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते।
(४) तस्येति ख०।
(५) द्वचस्यास्येतीति ख०।
(६) न श्रुतिरिति क० घ० च०, श्रुतमिति ख०, पुस्तकान्तरे च। एष श्लोकः ग० चिह्नितपुस्तके न पठितः।
(७) स ह्येति ख० ङ०।
(८) प्रियकाम्ययेति ख० ङ० पुस्तकान्तरे च।
(९) तं ह्यभवत् प्रहिता इति क० घ० च०। प्रहित इति ग०।

---

(क) ऋ० १०, ८, १। (ख) ऋ० १०, ८, ७।

नानानीयेन(क) सूक्तेन ऋषीणामेव(१) सन्निधौ ॥१४०॥
तानिन्द्रः प्राब्रवीत् सर्व्वां(२)स्तपध्वं सुमहत्तपः।
नातप्ततपसः शक्यमिदं(३) कृत्स्नं व्यपोहितुं ॥१४१॥
अथ ते वै तपस्तेपुः सर्व्वे स्वर्गजिगीषवः।
ततस्ते तपसोयेण पावमानीर्ऋचोऽब्रुवन् ॥१४२॥
अनसूयुरधीयानः शुश्रूषुस्तपसान्वितः।
दश पूर्व्वापरान् वंश्यान् पुनात्यात्मानमेव च ॥१४३॥
पापं यच्चा(४)करोत्किञ्चिन्मनोवाग्देहभोजनैः(५)।
पूतः स तस्मात् सर्व्वस्मात् स्वाध्यायफलमश्नुते(६) ॥१४४॥
पावमान्यः परं ब्रह्म शुक्रं ज्योतिः सनातनं(७)।
गायत्र्योऽन्योऽत्र यस्तासां प्राणानायम्य तन्मनाः(८) ॥१४५॥
पावमानं पितॄन् देवान् ध्यायेद्यश्च सरस्वतीम्।

---

(१) इवेति ख० ङ० पुस्तकान्तरञ्च।
(२) ताहि सर्व्वांस्त्विति क० ग० घ० च०।
(३) न ह्येतत्तपसा शक्यं विनेति क० ग० घ० च०।
(४) यचेति ख० ङ० पुस्तकान्तरञ्च।
(५) मनोवाग्देहदो जनैरिति क० घ० च०, मनोवाग्देहतो जनैरिति ग०।
(६) ऋषिसालोक्यमाप्नुयादिति ख० ङ० पुस्तकान्तरञ्च।
(७) ज्योतिसनातनमिति क० घ० च०।
(८) एष श्लोकः ख० ङ० पुस्तकयोर्न विद्यते।

---

(क) ऋ० ८, ११२, १।

पितॄंस्तस्योपवर्तेत(१) चौरं सर्पिर्मधूदकम् ॥१४६॥
एतत् सूक्तं शतं सौम्यं मण्डलं सचतुर्दशम्।
पावमान(२)मिति ख्यातमनुवाकास्तु सप्त वै(३) ॥१४७॥
सप्ताग्नेयानि सूक्तानि ददर्शाप इति त्रितः।
प्रकेतुने(क)ति त्वाष्ट्रस्तु त्रिशिराः सूक्तमुत्तरम् ॥१४८॥
ऋचस्त्वस्य(४) षडाग्नेय्यस्तृचस्त्वस्ये(ख)ति(५) यः परः।
तेनेन्द्रमभितुष्टाव स्वप्नान्त इति नः(६) श्रुतिः ॥१४९॥
अभवत्स हि(७) देवानां पुरोधाः प्रियकाम्यया(८)।
असुराणां स्वसुः पुत्रस्त्रिशिरा विश्वरूपभृत् ॥१५०॥
तमृषिं प्रहित(९)न्त्विन्द्रो देवेषु बुबुधेऽसुरैः।

---

(१) उपतिष्ठेतेति ङ० पुस्तकान्तरञ्च।
(२) वीजमाप्तमिति ख०।
(३) एष श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते।
(४) तस्येति ङ०।
(५) तृचस्यास्येतीति ङ०।
(६) न श्रुतिरिति क० घ० च०, श्रुतमिति ङ०, पुस्तकान्तरञ्च। एष श्लोकः ख० चिह्नितपुस्तके न पठितः।
(७) स ह्येति ख० ङ०।
(८) प्रायकाम्ययेति ख० ङ० पुस्तकान्तरञ्च।
(९) तं ऋजन् प्रहितः इति क० घ० च०। प्रहित इति ग०।

---

(क) ऋ० १०, ८, १। (ख) ऋ० १०, ८, ७।

सोऽस्य वज्रेण तान्याशु[1] शिरांसि चौण्यचिच्छिदत्[2] ॥१५१॥
तस्य यत्सोमपानन्तु मुखं सोऽभूत् कपिञ्जलः।
कलविङ्कः सुरापानमन्नादं तित्तिरि[3]स्त्वभूत् ॥१५२॥
तं वागभ्यवदद्वाग्मी[4] ब्रह्महासि शतक्रतो।
प्रपन्नं हतवान् यस्माद्[5] विश्वरूपं पराङ्मुखम् ॥१५३॥
तमभ्यषिञ्चत् सूक्तेन ऋषि[6]राप[क] इति स्वयम्।
सिन्धुद्वीपोपनुत्यर्थं तस्माच्छीलस्य पाप्मनः ॥१५४॥
मैथुनार्थमभीप्सन्तीं प्रत्याचष्टे यमीं यमः।
ओचित् सखायं[ख][7] संवादो[8] विवस्वतस्तु तयोस्तयोः॥१५५॥
इषा[ग]ग्नेये हविर्धाने युजे वा[घ]मत्र[9] संस्तुते।
परेयिवांस[ङ]मित्यत्र स्तूयते प्रथमो यमः[10] ॥१५६॥

---

(१) सोऽस्य वज्रेण तस्याशु इति क० घ० च०।
(२) तान्याशु शिरांसि चौण्ययाच्छिदददिति ग०। शिरांस्येवाच्छिदत् प्रभुः इति ख० पुस्तकान्तरेषु।
(३) तित्तिरः इति ख० घ० पुस्तकान्तरेषु।
(४) तोमेति ख० घ० च०।
(५) यस्मिति क० घ० च०।
(६) ऋषिरिति क० ग० घ० च०।
(७) तदोचिदितीति क० ग० घ० च०।
(८) संवादे इति ख० घ० च०।
(९) युजत्येतवेति ख० ग० घ० च०।
(१०) इत्येतस्मिन् स्तूयते यमाह्वयः इति क० घ० च०।

---

(क) ऋ० १०, ९, १। (ख) ऋ० १०, १०, १। (ग) ऋ० १०, ११, १।
(घ) ऋ० १०, १३, १। (ङ) ऋ० १०, १४, १।

अथर्व्वाणोऽथ भृगवः पितरोऽङ्गिरस(क)श्च ह ।
षष्ठ्यां देवगणास्तत्र संस्तूयन्ते शुभक्रयः ॥१५७॥
पितृभिश्चाङ्गिरोभिश्च संस्तुतो दृश्यते यमः ।
मन्त्रेषु वङ्गगः पादे विवस्वन्तं पिता हि सः ॥१५८॥
संस्कार्य्यप्रेतसंयुक्तैः पितृभिः स्तूयते यमः ।
प्रेहि प्रेही(ख)ति तिसृषु प्रेताग्निप उदाहृताः ॥१५९॥
पितॄणां हि पति र्देवो यमस्तस्मात् स सूक्तभाक्(१) ।
अतिद्रव(ग)स्तृचे श्वानौ परं पित्र्यमुदीरितम्(२) ॥१६०॥
परेयैव(३) तु सूक्तेन श्मशाने कर्म्म शंसति(४) ।
पितृदेवासुराणाञ्च अभवन्नभयस्त्रयः ॥१६१॥
हव्यकव्यवहौ चोभौ सह रक्षाग्निना सह(५) ।
तत्र मैन(घ)मिति त्वेतत्कव्यवाहनसंस्तुतिः(६) ॥१६२॥

---

(१) अथर्व्वाणोऽथ भृगवः इत्यादिसार्द्धश्लोकत्रयं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नोपलभ्यते ।

(२) उदीरितामिति क॰ ग॰ घ॰ च॰ ।

(३) उत्तरेणेति ग॰ ।

(४) एतच्छ्लोकार्द्धं ख॰ ङ॰ चिह्नितपुस्तकयोर्न पठितम् ।

(५) सहरक्षा च नामयः इति ख॰ ङ॰ पुस्तकान्तरच ।

(६) त्वाह कव्यवाहनमेवचेति ख॰ ङ॰ पुस्तकान्तरच ।

---

(क) ऋ॰ १०, १४, ६ । (ख) ऋ॰ १०, १४, ७ । (ग) ऋ॰ १०, १४, १० ।
(घ) ऋ॰ १०, १६, १ ।

इतराणि तु देवस्य(१) स्तुतिर्नाद्यासुरस्य च(२)।
अभवन्मिथुनं त्वष्टुः सरण्यूस्त्रिशिराः सह(३) ॥१६३॥
स वै सरण्यूं प्रायच्छत् स्वयमेव विवस्वते।
ततः सरण्व्यां(४) जज्ञाते यमयम्यौ विवस्वतः।
तौ चाप्युभौ यमावेव ज्यायांस्ताभ्यान्तु वै यमः ॥१६४॥

इति बृहद्देवतायां षष्ठोऽध्यायः ॥६॥

---

(१) देवस्येति ग०, दैवस्येति ख०।
(२) त्रिरिति ख० घ० पुस्तकाभावेषु।
(३) सहयौ च हेति ख० ग० घ०।
(४) सरण्वा इति ख० घ० पुस्तकाभावेषु।

# अथ सप्तमोऽध्यायः ।



सृष्ट्वा[१] भर्तुः परोक्षन्तु सरण्यूः सदृशीं स्त्रियम् ।
निक्षिप्य मिथुनं[२] तस्यामश्वा भूत्वापचक्रमे[३] ॥१॥
अविज्ञानाद्विवस्वांस्तु तस्यामजनयन्मनुम् ।
राजर्षिरभवत् सोऽपि[४] विवस्वानिव तेजसा ॥२॥
स विज्ञाय[५] त्वपक्रान्तां सरण्यूमश्वरूपिणीम् ।
त्वाष्ट्रीं प्रति जगामाशु वाजी भूत्वाश्वलक्षणः[६] ॥३॥
सरण्यूश्च[७] विवस्वन्तं विदित्वा[८] हयरूपिणम्[९] ।

---

(१) दृष्ट्वेति क० ग० घ० ।
(२) मैथुनमिति पाठ साधु ।
(३) अश्वो भूत्वोपचक्रमे इति क० ग० घ० ।
(४) राजर्षिरासीत् स मनुरिति ख० ङ० पुस्तकान्तरञ्च ।
(५) *विज्ञायेति ग० ।*
(६) स्वलक्षण इति क० ग० घ०, स्वलक्षणः इति ग० ।
(७) तमिति ख० ङ० पुस्तकान्तरञ्च ।
(८) विज्ञायेति ख० ङ० पुस्तकान्तरञ्च ।
(९) हरिरूपिणमिति पुस्तकान्तरम् ।

मैथुनायोपचक्राम[१] ताञ्च तत्रारुरोह सः ॥४॥
ततस्तयोस्तु वेगेन शुक्रं तदपतद्भुवि।
उपाजिघ्रच्च[२] सा त्वश्वा तच्छुक्रं गर्भकाम्यया ॥५॥
आघ्रातमात्राच्छुक्रात्तु कुमारौ संबभूवतुः।
नासत्यश्चैव दस्रश्च यौ स्तुतावश्विनाविति[३] ॥६॥
इतिहासमिमं यास्कः सरण्यूदेवते ब्रुवे[४]।
विवस्वतश्च त्वष्टुश्च त्वष्टे[क]ति सह मन्यते ॥७॥
पूषे[ख]ति पादौ पौष्णौ द्वौ त्वाग्नेयावु[५]त्तरौ तु यौ।
स्यात्तृतीयोऽपि वा पौष्णस्तिस्रश्चान्याः परास्तु याः[६] ॥८॥
अपां स्तुतिस्तृचैका[७] तथात्मास्तवस्ततःपरा।
स्तुतः परोक्षः सोमस्तु द्रप्स[ग] इत्युत्तरे तृचे ॥९॥
अब्देवताशीर्वादो[८] वा पयस्वत्यु[घ]त्तरा तु या।

(१) मिथुनायायचक्रामेति ख० ङ० पुस्तकान्तरञ्च।
(२) उपजिघ्रतीति क० घ० घ०।
(३) यो तु तौ वाश्विनावितीति क० ग० घ०।
(४) ब्रुधाविति क० ध० घ०, ब्रुवे इति ङ० पुस्तकान्तरञ्च।
(५) द्वावाग्नेयाविति ङ० पुस्तकान्तरञ्च।
(६) पौष्णस्तस्यापरस्तृच इति ख० ङ० पुस्तकान्तरञ्च।
(७) अपां स्तुति स्तुतिस्त्वेकेति ख०, अपां स्तुतिस्तुतस्त्वेकेति ङ० पुस्तकान्तरञ्च।
(८) अब्देवत्याशीर्वादः इति ख० ङ०, पुस्तकान्तरञ्च।

(क) ऋ० १०, १७, १। (ख) ऋ० १०, १७, ३। (ग) ऋ० १०, १७, ११।
(घ) ऋ० १०, १७, १४।

पतस्तस्याः स्तुतिर्मृत्योः[क]रन्ते क्रियास्व[1] कर्मणि ॥१०॥
मृतश्रिष्टेभ्य आशास्त इमे[ख] व्योगृजीवनं पुनः।
इमं जीवेभ्य[ग] आशास्ते तेभ्यः परिधिकर्मणि[2] ॥११॥
यथा[घ] धाम्युत्तरा लाष्ट्री ततो याम्या इमा[ङ]स्त्विति[3]।
स्त्रीणामाशिषमाशास्ते तथैवाञ्जनकर्मणि[4] ॥१२॥
उदीर्ष्व नारीत्यनया मृत[च]पत्नी तु रोदती[5]।
भ्राता कनीयान् प्रेतस्य निगदात्[6] प्रतिषेधति ॥१३॥
कुर्य्यादेतत् कर्म होता देवरो न भवेद्यदि।
प्रेतानुगमनं न स्यादिति ब्राह्मणशासनात् ॥१४॥
वर्णानामितरेषाञ्च स्त्रीधर्मोऽयं भवेन्न वा[7]।
प्राग्न्यर्थं धनुरादाने प्रेतस्यैव धनु[छ]र्जपेत्[8] ॥१५॥

---

(१) त्विति ङ०।
(२) एष श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते।
(३) यथर्धाम्युत्तरस्त्राष्ट्री ततो याम्या इमास्त्वितीति ख० ङ० पुस्तकान्तरस्य।
(४) तथा परिधिकर्म्मणीति क० ग० घ० च०।
(५) मृतं पत्यनुरोदतीति पाठः साधुः। मृतमन्वारुरोदतीति क० घ० च०।
(६) निगतेति क० घ० च०, निगत्वेति ग०।
(७) कुर्य्यादेतत् कर्म्म होतेति सार्द्धैकश्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु नास्त्यत।
(८) प्रान्त्यर्थं च जपत्यस्या, धनुरित्युत्तरामृचमिति क० ग० घ० च०।

---

(क) ऋ० १०, १८, २। (ख) ऋ० १०, १८, ३। (ग) ऋ० १०, १८, ४।
(घ) ऋ० १०, १८, ५। (ङ) ऋ० १०, १८, ७। (च) ऋ० १०, १८, ८।
(छ) ऋ० १०, १८, ९।

यस्मादेताः प्रयुज्यन्ते श्मशाने चान्त्यकर्म्मणि[१]।
तस्मादृदेत्तृचस्या[२]स्य देवतां मृत्युरेव[३] तु ॥१६॥
मन्त्रेषु ह्यनिरुक्तेषु देवतां कर्म्मतो वदेत्।
मन्त्रतः कर्म्मतश्चैव प्रजापतिरसम्भवे[४] ॥१७॥
पराद्यतस्रो यास्त्वत्र उपसर्प[क]ति पार्थिवी।
तासां प्रयोगः प्रेतस्य अस्थिसञ्चयकर्म्मणि ॥१८॥
प्रतीचीने[ख]यथास्थानि अपहृत्येतराणि तु[५]।
अहःसु[६] पितरो दधुरित्याभास्ते[७]ऽन्त्ययाशिषः[८] ॥१९॥
*अदःस्वागामिषु च मां द्रुयतः[९] समजीवयन्[१०]।*
निवर्त्तध्व[ग]मिदं सूक्तं[११] गवां केचिदपां विदुः ॥२०॥
अर्द्धर्चः प्रथमायास्तु[१२] अग्नीषोमीय उत्तरः।

---

(१) एते प्रयुज्यन्ते श्मशानेष्वन्तकर्म्मस्विति क॰ ग॰ घ॰ च॰।
(२) दृचस्येति क॰ ग॰ घ॰ च॰।
(३) मृत्युमेवेति पाठः समीचीनः।
(४) इदं जगाविति क॰ घ॰ च॰।
(५) प्रतीचीनमृचं त्वेतामपहृज्योत्तराश्च तत् इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(६) अहःस्विति ख॰ ङ॰ पुस्तकान्तरञ्च।
(७) दध्युरभ्याभ्रास्ते इति क॰ घ॰ च॰।
(८) दधुरभ्याभ्रास्ते समाशिषः इति ग॰।
(९) प्रयतः इति ख॰।
(१०) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नोपलभ्यते।
(११) इतीदन्त्विति क॰ ग॰ घ॰ च॰।
(१२) चेति ख॰ ङ॰ पुस्तकान्तरञ्च।

---

(क) ऋ॰ १०, १८, १०। (ख) ऋ॰ १०, १८, १४॥ (ग) ऋ॰ १०, १९, १।

ऐन्द्री षष्ठी द्वितीयायामुभौ देवौ निपातितौ ॥२१॥
दृगाचरन्तु प्राग्यर्थं मानसं सूक्तमुत्तरम्(१) ।
चौक्येन्द्राणि कुहे(क)त्यृच आग्नेयाभ्यां पराणि तु ॥२२॥
द्वयोऽथास्याश्विन(२)स्त्वेक ऐन्द्राग्न(३) उत्तमे युवम्(ख) ।
भद्रं(ग) सौम्यं प्रह्वि(घ)पौष्णं चौक्येन्द्राणि पराण्यतः ॥२३॥
तेषामाद्येन मत्तः सन्(४) स्वानि कर्म्माणि शंसति ।
यथा चरति भूतेषु यथा वर्षति पाति(५) च ॥२४॥
सूक्ते तदस्मिन्नष्टाभिर्ऋग्भि(६)रुतामभू(ङ)रिति(७) ।
सप्ते(च)ति मरुतः स्तौति पर्ज्जन्यं स्तौत्यृ(८)गुत्तरा ॥२५॥
अग्निमिन्द्रञ्च सोमञ्च पीवानं मेष(छ)मर्च्चति ।
पूर्व्वोऽर्द्धर्चोऽपर(९)स्त्वस्याः पर्ज्जन्यं वायुना सह ॥२६॥

---

(१) उच्यते इति क० ग० घ० च० ।
(२) द्वयोऽस्यास्त्वाश्विन इति ङ० ।
(३) ऐन्द्राग्नमिति क० ग० घ० च० ।
(४) स इति क० घ० च० ।
(५) वातीति ख० ङ० पुस्तकान्तरञ्च ।
(६) तदस्मिन्नर्द्धर्चे त्वृग्भिरिति क० ग० घ० च० ।
(७) अभूर्व्वितीति क० च०, प्रभूर्व्वितीति ग० ।
(८) परमं स्तौति स्तौति वचमिति क० घ० च० ।
(९) पूर्व्वोऽर्द्धर्चोत्तरः इति क० ग० घ० च० ।

---

(क) ऋ० १०, २२, १ । (ख) ऋ० १०, २४, ६ । (ग) ऋ० १०, २५, १ ।
(घ) ऋ० १०, २६, १ । (ङ) ऋ० १०, २७, ७ । (च) ऋ० १०, २७, १५ ।
(छ) ऋ० १०, २७, १७ ।

विक्रोशनाय[क] इत्यग्निमुत्तरा सूर्य्यमर्च्चति[१] ।
एतौ मे[ख]ऽयं य[ग]· इत्येते स्तुतिश्चैवेन्द्रवज्रयोः[२] ॥२७॥
द्वचे द्वचे[घ] धनुश्चैन्द्रं[३] देवाना[ङ]मिति तु त्र्यः ।
शीतोष्णवर्षदातारः पर्जन्यानिलभास्कराः ॥२८॥
अन्त्ये सूर्य्यानिलौ चोभौ स्तूयेते च पदे[४] सह ।
सा ते जीवातु[च]रित्यस्यामिन्द्रो वा सूर्य्य एव वा ॥२९॥
विश्वो ह्यी[छ]त्यत्र[५] संवाद[६] स्रुषेः शक्रस्य चैव हि ।
युग्मा एव तु शक्रस्य अयुग्मा एव तु स्रुषेः[७] ॥३०॥
स्नुषेन्द्रस्यागतान् देवान् दृष्ट्वा शक्रमनागतम् ।
यज्ञे परोक्षवत् प्राह श्वशुरो नागतो मम ॥३१॥
यद्यागच्छेद्भक्षयेत् स[ज] धानाः सोमं पिबेदपि ।
इति तस्या वचः श्रुत्वा तत्क्षणाद्दैत्यवज्रधृक् ॥३२॥
तिष्ठन् वेश्मसुत्तरस्यासुच्चैराह परोक्षवत्[८] ।

(१) एवत्विति क॰ ग॰ घ॰ च॰ ।
(२) एता उभौ त्वेताविति स्तूयेते वज्रमुत्तरेति क॰ घ॰ च॰ ।
(३) ऐन्द्रीति क॰ घ॰ च॰, ऐन्द्रीमिति ग॰ ।
(४) पदे संस्तूयते इति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(५) अन्यत्त्विति क॰ ग॰ घ॰ च॰ ।
(६) संवादमिति ख॰ ङ॰ ।
(७) युग्माः शक्रस्य विज्ञेया वसुक्रस्येतरा ऋचः इति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(८) स्नुषेन्द्रस्यागतान् देवानित्यादिसार्द्धश्लोकद्वयं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते ।

(क) ऋ॰ १०,२७,१८ । (ख) ऋ॰ १०,२७,२० । (ग) ऋ॰ १०,२७,२१ ।
(घ) ऋ॰ १०,२७,२२ । (ङ) ऋ॰ १०,२७,२३ । (च) ऋ॰ १०,२७,२४ ।
(छ) ऋ॰ १०, २८, १ । (ज) ऋ॰ १०, २८, २ ।

तृतीयया चतुर्थ्या च प्रदेवत्रे[क]त्यपां स्तुतिः[१] ॥२३॥

अपां नपा[ख]दित्यनेन नाम्नाग्नि[२]र्मध्यमः स्तुतः।

प्रति य[ग]दैश्वदेवन्त्[३] त्तस्य प्रे[घ]त्यैन्द्रमुत्तरम्[४] ॥२४॥

वैश्वदेवी प्रमे[ङ]त्येका मं मे[च]त्यैन्द्रो[५]द्वृचः[६] परः॥

कुरु श्रवण[छ]मर्चन्ति[७] परे द्वे[८] त्रासदस्यवम् ॥२५॥

मृते मित्रातिथौ राज्ञि तं नपातमृषिः परैः।

उपमश्रवसं यस्य[ज] चतुर्भिः स व्यशोकयत् ॥२६॥

प्रावेपा[झ] इति सूक्तं यत्तदक्षस्तुति[९]रुच्यते।

अक्षा[१०]नान् द्वादशी स्तौति नवम्याद्या च[११] सप्तमी ॥२७॥

---

(१) प्रदेवत्रेत्यपा स्तुताविति ख० ग० ङ० पुस्तकान्तरञ्च।

(२) नामाग्निरिति क० घ० च०।

(३) त्विति क० ग० घ० च०।

(४) उत्तममिति ख० ङ० पुस्तकान्तरञ्च।

(५) तस्यास्त्वैन्द्रः इति क० घ० च०।

(६) द्वृचः इति ग०।

(७) ऋचन्तः इति ख० ङ० पुस्तकान्तरञ्च।

(८) पराः षडिति क० घ० च०।

(९) तत्त्वस्येति क० घ० च०।

(१०) तत्रेति ख० ङ०।

(११) चर्येति ख० ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १०, ३०, १। (ख) ऋ० १०, ३०, ४। (ग) ऋ० १०, ३०, ११। (घ) ऋ० १०, ३२, १। (ङ) ऋ० १०, ३३, १। (च) ऋ० १०, ३३, २। (छ) ऋ० १०, ३३, ७। (ज) ऋ० १०, ३३, ८। (झ) ऋ० १०, ३४, १।

विक्रोशनास[क] इत्यग्निमुत्तरा सूर्य्यमर्चति[१]।
एतौ मे[ख]ऽयं य[ग]·इत्येते स्तुतिश्चैवेन्द्रवज्रयोः[२] ॥२७॥
तृचे तृचे[घ] धनुश्चैन्द्रं[३] देवाना[ङ]मिति तु चयः।
शीतोष्णवर्षदातारः पर्जन्यानिलभास्कराः ॥२८॥
अन्त्ये सूर्य्यानिलौ चोभौ स्तूयेते च पदे[४] सह।
मा ते जीवातु[च]रित्यस्यामिन्द्रो वा सूर्य्य एव वा ॥२९॥
विश्वो ह्यौ[छ]त्यत्र[५] संवाद[६] स्नुषेः शक्रस्य चैव हि।
युग्मा एव तु शक्रस्य अयुग्मा एव तु स्नुषेः[७] ॥३०॥
स्नुषेन्द्रस्यागतान् देवान् दृष्ट्वा शक्रमनागतम्।
यज्ञे परोक्षवत् प्राह श्वशुरो नागतो मम ॥३१॥
यद्यागच्छेद्भक्षयेत् स[ज] धानाः सोमं पिबेदपि।
इति तस्या वचः श्रुत्वा तत्क्षणादित्यवज्रधृक् ॥३२॥
तिष्ठन् वेद्यामुत्तरस्यामुच्चैराह परोक्षवत्[८]।

---

(१) स्तवत्विति क॰ ग॰ घ॰ ध॰।
(२) स्तवा उभौ स्तवाविति स्तूयेते वज्रमुत्तरेति क॰ घ॰ च॰।
(३) ऐन्द्रीति क॰ घ॰ ध॰, ऐन्द्रीमिति ग॰।
(४) पदे संस्तूयते इति ख॰ छ॰ पुस्तकान्तरञ्च।
(५) त्वन्यस्त्विति क॰ ग॰ घ॰ ध॰।
(६) संवादमिति ख॰ छ॰।
(७) युग्माः शक्रस्य विज्ञेया वसुक्रस्येतरा ऋचः इति ख॰ छ॰ पुस्तकान्तरञ्च।
(८) स्नुषेन्द्रस्यागतान् देवानित्यादिसार्द्धश्लोकद्वयं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते।

---

(क) ऋ॰ १०,२७,१८। (ख) ऋ॰ १०,२७,२०। (ग) ऋ॰ १०,२७,२१।
(घ) ऋ॰ १०,२७,२२। (ङ) ऋ॰ १०,२७,२३। (च) ऋ॰ १०,२७,२४।
(छ) ऋ॰ १०, २८, १। (ज) ऋ॰ १०, २८, २।

तृतीयया चतुर्थ्या च प्रदेवत्रे[क]त्यपां स्तुतिः[१] ॥२३॥
अपां नपा[ख]दित्यनेन नाम्नाग्नि[२]र्मध्यमः स्तुतः।
प्रति य[ग]द्वैश्वदेवन्त[३] त्तस्य प्रे[घ]त्यैन्द्रमुत्तरम्[४] ॥२४॥
वैश्वदेवी प्रमे[ङ]त्येका सं मे[च]त्यैन्द्रो[५]द्व्यृचः[६] परः ॥
कुरु श्रवण[छ]मर्चन्ति[७] परे द्वे[८] त्रासदस्यवम् ॥२५॥
मृते मित्रातिथौ राज्ञि तं नपातमृषिः परैः।
उपमश्रवसं यस्य[ज] चतुर्भिः स व्यशोकयत् ॥२६॥
प्रावेपा[झ] इति सूक्तं यत्तदक्षस्तुति[९]रुच्यते।
अक्षा[१०]चान् द्वादशीं स्तौति नवम्याद्या च[११] सप्तमी ॥२७॥

---

(१) प्रदेवत्रेत्यपां स्तुताविति ख० ग० ङ० पुस्तकान्तरञ्च।

(२) नामाग्निरिति क० घ० च०।

(३) त्विति क० ग० घ० च०।

(४) उत्तममिति ख० ङ० पुस्तकान्तरञ्च।

(५) तस्यास्त्वैन्द्रः इति क० घ० च०।

(६) द्व्यृचः इति ग०।

(७) अर्चन्तः इति ख० ङ० पुस्तकान्तरञ्च।

(८) पराः षडिति क० घ० च०।

(९) तत्त्वस्येति क० घ० च०।

(१०) तत्रेति ख० ङ०।

(११) चयेति ख० ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १०,३०,१। (ख) ऋ० १०,३०,४। (ग) ऋ० १०,३०,१४।
(घ) ऋ० १०,३२,१। (ङ) ऋ० १०,३३,१। (च) ऋ० १०,३३,२।
(छ) ऋ० १०,३३,४। (ज) ऋ० १०,३३,६। (झ) ऋ० १०,३४,१।

षयोदश्यौ छपि स्तौति कितवश्चानुशासति[१]।
अचा[२]स्तु ग्रैषाविन्दन्ति अवुभ[क] वैश्वदेवते[३] ॥३८॥
साविचमेके मन्यन्ते महः अग्ने[ख] स्तव परम्।
आचार्य्या शौनको यास्को गालवश्चोत्तमाम्हचम्[४] ॥३९॥
नम[ग] सौर्य्यमैन्द्रमस्मिन्[घ] सौर्य्ये षष्ठ्या तु या स्तुता[५]।
निपातिनी[६]स्ता' सूक्तान्ते वैश्वदेवो[७]ऽच तु हृच[८] ॥४०॥
आश्विनानि तु य[ङ]स्तौणि ऐन्द्राण्यस्ते वसु[च] प्र च।
ऐन्द्राणामुत्तमा यास्तु स्तुतोऽर्द्धर्चे[९] वृहस्पति[छ] ॥४१॥
परे दिव पर्य्या[ज]ग्नेये प्रथमस्योत्तमा तु या[१०]।

(१) एतच्छ्लोकार्द्धं ख० ङ० चिह्नितपुस्तकयोर्न विद्यते।
(२) षचाः इति ङ०।
(३) वैश्वदेवतमिति पाठ साधुः।
(४) एष श्लोकः क० ग० ध० च० चिह्नितपुस्तकेषु न पठितः।
(५) षष्ठ्यां तु संस्तुत इति ख० ङ० पुस्तकान्तरच्च।
(६) निपातिन इति ख० ङ०।
(७) सूक्तान्त्यो वैश्वदेव्यः इति क० ग० घ० च०।
(८) हृचः इति ग०।
(९) यास्तु यर्द्धर्चे लिति क० ग० घ० च०, याः स्तुततोऽर्द्धर्चे इति ङ०।
(१०) उत्तमेन लिति ख० ङ० पुस्तकान्तरच्च।

(क) ऋ० १०, ३५, १। (ख) ऋ० १०, ३६, १२। (ग) ऋ० १०,३७,१।
(घ) ऋ० १०, ३८, १। (ङ) ऋ० १०, ३९, १। (च) ऋ० १०, ४२, १।
(छ) ऋ० १०, ४२, ११। १०,४३, ११। १०, ४४, ११। (ज) ऋ० १०,
४५, १।

द्यावापृथिव्यौ विश्वे च पञ्चा(१)र्द्धर्चेन संस्तुताः ॥४२॥
आसीत् काक्षीवती घोषा पापरोगेण दुर्भगा।
उवास षष्टिवर्षाणि पितुरेव गृहे पुरा ॥४३॥
आतस्थे महतीं चिन्ता न पुत्रौ न पतिर्मम।
जरां प्राप्ता मुधा तस्मात् प्रपद्येऽहं शुभस्पती ॥४४॥
यथैतौ मामकस्तात आराध्यावाप यौवनम्।
आयुरारोग्यमैश्वर्य्यं सर्व्वभूतहने विषम्(२) ॥४५॥
रूपवत्त्वञ्च सौभाग्यमहं तस्य सुता यदि।
*ममापि मन्त्राः प्रादुःष्युर्यैः स्तोष्येते मयाश्विनौ* ॥४६॥
चिन्तयन्तीति सूक्तानि त्रीणि घोषा ददर्श सा।
स्तुतौ तावश्विनौ देवौ प्रीतौ तस्या भगान्तरम् ॥४७॥
प्रविश्य विजरारोगां सुभगाञ्चक्रतुश्च तौ।
भर्त्तारं ददतुस्तस्यै सुहस्त्यञ्च सुतं मुनिम्(३) ॥४८॥
ददतुस्तौ सुपर्णाभ्यां यन्नामत्येति(४) कीर्त्तिते।
काक्षीवत्यै च घोषायै तथा ददतुरोजसा(५) ॥४९॥

---

(१) पञ्चौ इति ख॰ ग॰ ङ॰।
(२) सर्व्वभूतहते विषमिति ङ॰।
(३) मनोरिति ङ॰।
(४) येनासत्येतीति ख॰।
(५) *न तस्या मातुरोजयेति* ख॰ ङ॰ पुस्तकान्तस्थ। आसीत् काक्षीवती घोषेत्यादि सप्त श्लोकाः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न सन्ति।

प्राजापत्यासुरी त्वासीद्विकुण्ठा नाम नामतः ।
सेच्छतीन्द्रसमं पुत्रं तेपेऽथ सुमहत्तपः ॥५०॥
सा प्रजापतितः कामान्(१) लेभेऽथ विविधान् वरान्(२) ।
तस्याश्चेन्द्रः स्वयं(३) जज्ञे जिघांसुर्दैत्यदानवान् ॥५१॥
एकदा(४) दानवैः सार्द्धं समरे समसज्जत ।
जघान तेषां नवतीर्नव सप्त च सप्तधा(५) ॥५२॥
भित्त्वा(६) स्वबाहुवीर्येण हैमरौप्यायसीः(७) पुरीः ।
हत्वा सर्वान् यथास्थानं पृथिव्यादिष्ववस्थितान्(८) ॥५३॥
राज्यं प्राप स दैत्येषु स्वेन वीर्य्येण दर्पितः ।
देवान् बाधितुमारेभे मोहितोऽसुरमायया ॥५४॥
वध्यमानास्तु तेनापि असुरेणामितौजसा ।
उपाधावन्नृषिश्रेष्ठं तत्प्रबोधाय सप्तगुम्(९) ॥५५॥

---

(१) काममिति क॰ घ॰ च॰ ।
(२) सुमहत्तमाः इति क॰ ग॰ घ॰ च॰ ।
(३) सुतः इति ख॰ ङ॰ पुस्तकान्तरच ।
(४) एकश्चेति क॰ घ॰ च॰ ।
(५) सप्तकानिति ख॰ ङ॰ पुस्तकान्तरच ।
(६) जित्वेति ख॰ ङ॰ पुस्तकान्तरच ।
(७) हैमवत्यायसीरिति क॰ घ॰ च॰ ।
(८) एतदर्द्धश्लोकार्द्धं क॰ घ॰ च॰ चिह्नितपुस्तकेषु न पठितम् ।
(९) राज्यं प्राप स दैत्येष्वित्यारभ्य श्लोकद्वयं क॰ ग॰ घ॰ च॰ चिह्नित-पुस्तकेषु नापठ्यत ।

प्राजापत्यासुरी त्वासीद्विकुण्ठा नाम नामतः।
सेच्छतीन्द्रसमं पुत्रं तेपेऽथ सुमहत्तपः ॥५०॥
सा प्रजापतितः कामान्[1] लेभेऽथ विविधान् वरान्[2]।
तस्याश्चेन्द्रः स्वयं[3] जज्ञे जिघांसुर्दैत्यदानवान् ॥५१॥
एकदा[4] दानवैः सार्द्धं समरे समसज्जत।
जघान तेषां नवतीर्नव सप्त च सप्तधा[5] ॥५२॥
भित्त्वा[6] स्ववाङ्कवीर्येण हैमरौप्यायसीः[7] पुरीः।
हत्वा सर्व्वान् यथास्थानं पृथिव्यादिष्ववस्थितान्[8] ॥५३॥
राज्यं प्राप स दैत्येषु स्वेन वीर्य्येण दर्पितः।
देवान् बाधितुमारेभे मोहितोऽसुरमायया ॥५४॥
बध्यमानास्तु तेनापि असुरेणामितौजसा।
उपाधावन्नृषिश्रेष्ठं तत्प्रबोधाय सप्तगुम्[9] ॥५५॥

---

(१) काममिति क॰ घ॰ च॰।
(२) सुमहत्तपाः इति क॰ ग॰ घ॰ च॰।
(३) सुतः इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(४) एकश्चेति क॰ घ॰ च॰।
(५) सप्तकानिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(६) भित्वेति ख॰ ङ॰ पुस्तकान्तरञ्च।
(७) हैमवत्यायसीरिति क॰ घ॰ च॰।
(८) एतच्छ्लोकार्द्धं क॰ घ॰ च॰ चिह्नितपुस्तकेषु न पठितम्।
(९) राज्यं प्राप स दैत्येष्वित्यादिश्लोकद्वयं क॰ ग॰ घ॰ च॰ चिह्नित-पुस्तकेषु नापद्यत।

विष्णुलोकेषु[१] चैश्वर्य्यं प्रभुत्वं भुवनेषु च ॥६१॥
प्र वो महे[क] इति त्वस्यामात्मन्ये[२] वार्पयन् स्वयम्[३]।
वैश्वानरे गृहपतौ यविष्ठेऽग्नौ च पावके ॥६२॥
वषट्कारेण वृक्णेषु अग्नौ च[४] महसः स्तुतौ[५]।
अपचक्राम देवेभ्यः सौचीकोऽग्नि[६]रिति श्रुतिः ॥६३॥
स प्राविशदपक्रम्य ऋतूनपो वनस्पतीन्।
ततोऽसुराः प्रादुरासन्नष्टेऽग्नौ हव्यवाहने ॥६४॥
तेऽग्निमेवान्वैचन्त देवा हत्वासुरान् युधि।
तन्तु दूराधमश्चैव वरुणश्चान्वपश्यताम् ॥६५॥
उभावेनं समादाय देवानेवाभिजग्मतुः।
दृष्ट्वा देवास्तेनमूचुरग्ने हव्यानि नो वह ॥६६॥
वरं गृहाण मत्तश्च चित्रभानो भजस्व नः[७]।
प्रत्युवाचाथ तानग्निर्विश्वे देवा यदात्थ माम्[८] ॥६७॥
तत्करिष्ये जुषतान्तु होत्रं[९] पञ्च जना मम।

---

(१) त्वषु सर्व्वेष्विति क० ग० घ० च०।
(२) आत्मनः इति क० ग० घ० च०।
(३) वीर्य्यमव्ययमिति ग०।
(४) त्विति ख० पुस्तकान्तरञ्च।
(५) भाष्टवर्गौ सह स्तुताविति ख० ग०, सहसस्तुते इति घ०।
(६) अभिचक्राम सौचिको भयादग्निरिति क० ग० घ० च०।
(७) चेति क० घ० च०।
(८) वैश्वानराय दातुं मेति क० घ० च०, विश्वे शृण यथाक्रमादिति ग०।
(९) होत्रमिति ख० ग० घ० पुस्तकान्तरञ्च।

---

(क) ऋ० १०, ५०, १।

मद्दैवत्यानि[१] वै सन्तु यज्ञो मद्देवतोऽस्तु च[२]।
तवाग्ने यज्ञ [क]इत्येतत् प्रत्यर्द्धि[३] स्विष्टकृच्च सः[४] ॥७३॥
तस्य[५] त्रीणि सहस्राणि नव त्रीणि [ख]शतानि च।
त्रिंशच्चैव तु देवानां हव्यानिव[६] वरान् ददुः ॥७४॥
ततोऽग्निः सुमनाः प्रीतो विश्वैर्देवैः पुरस्कृतः।
विधूयाङ्गानि यज्ञेषु चक्रे शौच[७]मतन्द्रितः ॥७५॥
भ्रातृभिः सहितः प्रीतो दिव्यात्मा हव्यवाहनः।
तस्यास्थि देवदार्व्वासीन्मेदोमांसञ्च गुग्गुलुः ॥७६॥
सुगन्धि तेजनं स्नायुः[८] शुक्रं रजतकाञ्चने।
रोमाणि काशाः[९] केशाश्च कुशाः कूर्म्मा नखानि च ॥७७॥
अन्त्राणि शैवलास्त्वेव मज्जा सिकतशर्करा[१०]।

---

(१) मे दैवत्यानीति ख०, मद्दैवत्यान्विति ग०, मद्दैवत्यानीति क० घ० च०।
(२) त्वच' इति ग०।
(३) प्रत्यार्द्धीति ग०।
(४) एतच्छ्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु न विद्यते।
(५) यस्येति क० ग० घ० ङ० च०।
(६) सर्व्वाण्येतानिति ख०।
(७) शौचमिति ग०।
(८) स्नुचिति क० घ० च०, सुगन्धं तजनत् प्रापुरिति ख०।
(९) कोशाविति क० घ० च०।
(१०) शिकतशर्करा इति ख०, सिकतशार्करा इति ग०।

---

(क) ऋ० १०, ५१, ८। (ख) ऋ० १०, ५२, ६।

सुदस्य वन्धुप्रभृतीन् द्वैपादा ये त्रिमण्डले।
द्वौ किराताकुली[१] नाम ततो मायाविनौ द्विजौ ॥८३॥
असमातिः पुरोऽधत्त वरिष्ठौ तौ हि मन्यते।
तौ कपोतौ द्विजौ भूत्वा गत्वा गौपायनान्[२]भि ॥८४॥
मायाबलाच्च योगाच्च सुबन्धुमभिपेततुः।
स दुःखादभिघाताच्च मुमोह च पपात च ॥८५॥
तौ ततोऽस्यासुमालुच्य[३] राजानमभिजग्मतुः।
ततः सुबन्धौ पतिते गतासौ भ्रातरस्त्रयः ॥८६॥
जेपुः स्वस्त्ययनं सर्वे मे[क]ति गौपायनाः[४] सह।
मन[ख]श्चावर्तयन्तोऽस्य[५] सूक्तं य[ग]दिति तेऽभ्ययुः ॥८७॥
जेपुश्च भेषजार्थं यं प्रतारी[घ]ति परन्ततः।
सूक्तस्याद्यस्तृचस्तत्र[६] निर्ऋतेरपनोदनः ॥८८॥

---

(१) किरातौ कुली इति ग०। कली इति क० ख० ङ० च०।
(२) गौपायनानिति घ०।
(३) चानुप्येति ख० चालोच्येति ग० ङ०।
(४) गौपायना इति ख० ग०।
(५) चावर्त्तनं तस्येति ख०।
(६) तच्चेति ख० ग०।

---

(क) ऋ० १०, ५७, १। (ख) ऋ० १०, ५८, १। (ग) ऋ० १०,५९, १।
(घ) ऋ० १०, ५९, १।

सूक्तेनाथ स्तुव[१]न्नग्निं द्वैपदेन यथाविधु[२] ।
अग्निरित्यब्रवीदेता[३]नयमन्तः परैत्वसून्[४] ॥८५॥
सुबन्धुरस्य चैक्ष्वाको[५]मया गुप्तो हितार्थिना ।
सुबन्धवे प्रदायासून् [६]जीवेत्युक्ता च पावकः ॥८६॥
स्तुतो गौपायनैः प्रीतो जगाम त्रिदिवं प्रति ।
अयं माते[क]ति दृष्टास्ते[७] सुबन्धोरसुमाह्वयन् ॥८७॥
शरीरमभिनिर्दिश्य सुबन्धोः पतितं भुवि ।
सूक्तशेषं जगुस्तस्य चेतसो धारणाय ते ॥८८॥
लब्धासुस्ताय[ख]मित्यर्धां पृथक्पाणिभिरस्पृशन् ।
यद्विदं[ग] वैश्वदेवानि द्वितीयेऽङ्गिरसां स्तुतिः[८] ॥८९॥
जन्म कर्म च सख्यञ्च[९] इन्द्रेण सह कीर्त्तयन् ।

---

(१) सूक्तेनैषां स्तुवन्निति क० ग० घ० च० ।
(२) द्वैपदं यत्तद्विधिविति क० घ० च० ।
(३) देवानिति ग० ।
(४) परा व्यसुरिति क० ग० घ० ङ० च० ।
(५) सुबन्धोरस्य चैक्ष्वाकोरिति क० ख० घ० च० ।
(६) चसुमिति ख० ग० ।
(७) प्रेमेयेति ख० ।
(८) ऋषिरिति क० घ० च० ।
(९) सख्याञ्चेति क० घ० च० ।

---

(क) ऋ० १०, ६०, ७ । (ख) ऋ० १०, ६०, १२ । (ग) ऋ० १, ६१, १ ।

स्तौति प्रनून[क]मित्याद्यां सावर्ण्यस्य मनोः स्तुतिः ॥१००॥
तस्यैव चायुषोऽर्थाय देवान् स्तौत्यभ्ययादृषिः ।
सुत्रामाणं [ख]महिमूषु[1] दक्षस्य[ग]त्यदितेः स्तुतिः ॥१०१॥
पथ्यास्वस्ति स्वस्ति [घ]रुद्भिस्स्वस्तितो मरुतां स्तुतिः ।
मारुतीमृचमन्वाहेत्युक्तमाध्वर्यवेषु हि ॥१०२॥
या गौ[ङ]रिति तथैवाम्यां स्तूयते मध्यमानुवाक्।
मित्राय मैत्रावरुणी भुज्युमंहस[च] आश्विनी[2] ॥१०३॥
स्तौत्यापि च मनुं स्वस्ति द्वृचे[3] वाचश्च मध्यमां ।
अथेमां[छ] द्वे बार्हस्पत्ये भद्रा [ज]आग्नेयमाश्रियः[4] ।१०४॥
यज्ज्योतिरमृतं ब्रह्म यद्योगात्समुपाश्नुते ।
तज्ज्ञानमभितुष्टाव सूक्तेनाथ बृहस्पतिः ॥१०५॥
जीवनार्थं प्रयोगस्तु मन्त्राणां प्रतिषिध्यते ।
वेदतत्त्वार्थविज्ञानं प्रायेणात्र हि दृश्यते ॥१०६॥

---

(१) महिमूषीति ख० ।
(२) स्तौति प्रनूनमित्याद्या' इत्यादि भुज्युमंहस आश्विनीत्यन्तपाठः क० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।
(३) द्वृचे इति ग० ।
(४) अथाग्नेयमथाश्रय· इति क० घ० च०, तथा आग्नेयमाप्रियाः इति ख० ।

---

(क) ऋ० १०, ६२, ८ । (ख) ऋ० १०, ६३,१० । (ग) ऋ० १०, ६४, ५ ।
(घ) ऋ० १०, ६३, १५ । (ङ) ऋ० १०, ६५, ६ । (च) ऋ० १०,६५, १२ ।
(छ) ऋ० १०, ६७, १ । (ज) ऋ० १०, ६८, १ ।

आचार्याः केचिदित्याङ्गरच वाग्विदुषां स्तवः।
यथाभिर्निन्द्यते[१] लृग्भिः सूक्तेऽन्याभिरनर्थवित् ॥१०७॥
ये देनामन्वविन्दन्त विद्वांस चर्षितां शचीम्[२]।
तया च ह्यभजद्यज्ञे तद्वोक्तं[३] तृतीयया ॥१०८॥
प्रशस्यते दृशम्यां[४] तु विद्वानुत्तमया लृचा[५]।
यज्ञे महर्लिंङ्गामाह विनियोगश्च कर्म्मणाम् ॥१०९॥
परे तु स्तूयते चोक्ता अष्टौ(क) चैवादितेः[६] सुताः।
धातेन्द्रो वरुणो मित्रः अंशः सूर्य्योऽर्य्यमा भगः ॥११०॥
ऐन्द्रेऽजनिष्ट.[७] सूक्ते द्वे प्रख्रि(ख)त्यच परन्तु यत्।
तच प्राच्यः प्रतीच्यश्च स्रवन्त्यो दक्षिणाश्च वा.[८] ॥१११॥
ताः सप्त सप्तकैर्वर्गैः संस्तूयन्ते प्रधानतः[९]।

(१) तथाहिं निन्दते इति ख०।
(२) विद्वासर्पिगता सतीमिति ख०, विद्वासर्पिगवा सतीमिति ग०।
(३) उक्त इति क० घ० च०।
(४) दशम्येति ग०।
(५) ऋचेति ख० ग०।
(६) चास्य क्षाष्टौ चादितये इति क० घ० च०।
(७) जनिष्ठा इति क० ङ० घ०।
(८) दक्षिणाश्चेति ख०, दक्षिणाश्रया इति ग०।
(९) दशकैर्व्याप्ते सस्तूयन्ते हिभक्तय इति ग०।

(क) ऋ० १०, ७२, ८। (ख) ऋ० १०, ७५, १।

ग्रावणामा वो[क] मारुते द्वे अभ्रप्रुष[ख] इति स्तुते ॥११२॥
अपश्य[ग]मिति चाग्नेये य इमा[घ] वैश्वकर्मणे।
मान्यवे यस्त[ङ] इत्येते परं यत्तु मम व्रते ॥११३॥
तदाशीर्वादवद्भलं स्तौति विश्वान् दिवौकसः।
परा[च] कद्रा स आग्नेयं[1] य[छ]दु[ज]दित्यष्टकं परम् ॥११४॥
मैत्रावरुण्यृक्तचास्ति चतुर्थ्यैन्द्राण्युपोत्तमा।
सावित्री चैव सूर्य्या च सैव पत्नी विवस्वतः ॥११५॥
स्तुता वृषाकपायी[झ]ति उषा इति च योच्यते[2]।
उषा ह्येषा[3] त्रिधात्मानं विभज्य प्रैति[4] गोपतिम् ॥११६॥
उषा[5] पुरोदये भूत्वा सूर्य्या मध्यन्दिने स्थिते।
भूत्वा वृषाकपायी च दिनान्तेष्वनुकीर्तिता[6] ॥११७॥

---

(१) आग्नेये इति क॰ ग॰ घ॰ च॰।
(२) च पूषा इवितयोच्यते इति ख॰।
(३) एषेति क॰ ग॰ घ॰ च॰।
(४) अन्वेतीति ख॰।
(५) उषा॰ इति क॰ घ॰ च॰।
(६) वृषाकपायीति दिनान्तेष्वेव गच्छतीति ख॰।

---

(क) ऋ॰ १०, ७६, १। (ख) ऋ॰ १०, ७७, १। (ग) ऋ॰ १०, ७९, १।
(घ) ऋ॰ १०, ८१, १। (ङ) ऋ॰ १०, ८३, १। (च) ऋ॰ १०, ८५,२९।
(छ) ऋ॰ १०, ८५,१४। (ज) ऋ॰ १०,८५, २१। (झ) ऋ॰१०, ८६,१३।

सत्यसूर्य्यर्त्तुसोमानां सौर्य्यायत्र ह्यृगुच्यते ।
पराभिस्तिसृभिस्तृग्भि[१]रुच्यते सोम औषधः[२] ॥११८॥
विस्पष्टमुत्तरा त्वासामृक् चन्द्रमसमर्चति ।
सूर्य्यायै भावदृत्तन्तु रैभी[क]त्यष्टाभिरुच्यते ॥११९॥
य[ख]दश्विनौ तृच[३]स्तौति सूर्य्यं[४] एवोत्तरार्चति ।
सप्तदृशौ वैश्वदेवौ सूर्य्याचन्द्रमसौ परा ॥१२०॥
परस्याः प्रथमौ पादौ सौर्य्यौ चान्द्रमसौ परौ ।
और्णनाभो हृचे त्वस्मिन्नश्विनौ मन्यते स्तुतौ ॥१२१॥
सूर्य्याचन्द्रमसौ तौ हि प्राणापानौ च तौ स्तुतौ ।
अहोरात्रे[५] च तावेव स्यातां तावेव रोदसी ॥१२२॥
अश्नुवाते हि तौ लोकाञ्ज्योतिषा च रसेन च ।
पृथक् पृथक्के चरतु[६] दक्षिणेनोत्तरेण च ॥१२३॥

---

(१) त्वचेति ख० ।
(२) औषधिरिति ग० ।
(३) हृच इति ग० ।
(४) सूर्य्यमिति पाठः साधुः ।
(५) अहोरात्राविति ख० ।
(६) तौ चरतः इति पाठः सङ्गतः । चेरतुरिति ग० ।

---

(क) ऋ० १०, ८५, ६ । (ख) ऋ० १०, ८५, १४ ।

[1]सुकिंशुक[क]मिति त्वेयां सूर्य्यामारोहतीं पतिम्।
स्तौति विश्वावसुश्चैव हृचे[2] गन्धर्व्वमुत्तरे ॥१२४॥
अनृचरा[ख] इत्यनया यौ तौ[3] स्तौतीह दम्पती।
गृहान् प्रपद्यमानान्तु पराभिः पञ्चभिर्वधूम् ॥१२५॥
वाससश्च बधूनाश्च वरदानं प्रचक्षते।
ततस्त्रिभिर्विरागस्य यद्बध्न[ग][4] इति वाससः ॥१२६॥
तद्युक्तया तया सर्गो निद्रिते पत्युरेव च।
ऋगुत्तरा तृतीयस्य विभवे सति वाससः ॥१२७॥
अन्यत्र मैथुनाद्भर्त्तुर्हरणं प्रतिषिध्यते।

---

(१) ख॰ चिह्नितपुस्तके सुकिंशुकमिति श्लोकात् प्राक्,—
सूर्य्यं सरति भूतेषु सुवीरः पतितानि वा।
सुहृयत्नाधात्येषु सर्व्वकार्य्याणि स वदत्॥
चाव द्रवति वाचा य श्वावनिन्द्रतुमुच्यते।
वमेघन्ते समेतानि निर्म्मितेऽथ चन्द्रमो॥
इत्यधिकपाठोऽस्ति।

(२) हृचे इति ग॰।

(३) यात्यै इति ख॰।

(४) यद्बध्नइति वाससः इत्यादि ऋगुत्तरा तृतीयस्येत्यन्तपाठ क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न विद्यते।

---

(क) ऋ॰ १०, ८५, २०। (ख) ऋ॰ १०, ८५, २३। (ग) ऋ॰ १०, ८५, ३०।

ये[क] यज्ञनाशिनीं स्तौति हृचे[१]मा परिपन्थिनः ॥१२८॥
अष्टमे य[ख]दिति लाज्ञ यादृग्वाधूयमर्हति ।
आशास्ते[२] चैव विविधं ज्ञातिभ्यश्चात्तुशासनम्[३] ॥१२९॥
वद्वा स्त्री भाववृत्ति[४]श्च परया तत्र कथ्यते ।
पराभिराशीश्चाशास्ते पृथक् ताभ्यः सहैव च । ॥१३०॥
मन्त्रा वैवाहिका ह्येते निगद्यन्ते नृणामपि ।
आर्त्तिज्या यजमानाश्च यथारूपं विशेषतः ॥१३१॥
प्रत्यृचं प्रतिकीर्त्यन्ते देवताश्चेह यासु याः[५] ।

---

(१) हृषे इति ग० ।

(२) आशास्तीति क० ग० घ० च० ।

(३) श्वानिमिश्चानुवासनमिति ख० ।

(४) भावक्षितिरिति क० घ० घ० ।

(५) ख० चिह्नितपुस्तके, पराभिराशीराशास्ते इत्यादि देवताश्चेह यासु याः इत्यन्तपाठो न विद्यते । तत्र अस्मिन् स्थले,

गृभ्णामि(ग)तद्विवायोहक्तारन्ह धनमाशिषः ।
आशास्ते परयास्तस्याः संयोगार्थास्तथाशिषः ॥
पराभिराशिषः शास्ते पृथक् ताभ्यः सह क्वचित् ।
अघोरे(घ)ति ऋचे तस्याः स(ङ)मिद्धेति द्वयोर्द्वयोः ॥
आना प्रजापतेः प्रैमानश्च(च) यथारूपं विशेषतः ।
प्रत्यृचं कीर्त्यते देवता तेषु भाववृत्ततः ॥

इति पाठो वर्त्तते ।

---

(क) ऋ० १०, ८५,३१ । (ख) ऋ० १०,८५,३४ । (ग) ऋ० १०, ८५,३६ ।
(घ) ऋ० १०, ८५,४४ । (ङ) ऋ० १०,८५,४६ । (च) ऋ० १०, ८५, ४३ ।

वदेत्तां[1] देवतां तासु नराशंसीर्वदेत वा ॥१२२॥
उषसः सर्व्वया चैता भाववृत्तं प्रचक्षते।
सूर्य्यया सह सूक्तेऽस्मिन् पादश्चैवात्र लक्ष्यते ॥१२३॥
वि हि[क] वार्षाकपं सूक्तमसौ तु[2] कपिलो वृषा।
इन्द्रः प्रजापतिश्चैव विश्वस्मादिन्द्र उत्तरः[ख] ॥१२४॥
रक्षोहणा[ग]दि चाग्नेयं[3] चीन् सौम्यग्नीन् परं त्वि.[घ]।
इनश्च मध्यमश्चैव असौ वैश्वानरश्च यः ॥१२५॥
इन्द्रं[ङ] पुरुषसूक्त[च]श्च[4] अन्यया पुरुषस्य तु।
यथैनमभजन् साध्या[5] यज्ञार्थं सोऽर्थ[6] उच्यते ॥१२६॥
आपान्तमन्यु[छ]रित्यर्धा[7] स्तुतः सोमस्तु[8] दृश्यते।

---

(१) वदेतामिति ख० ग०।
(२) ह्वीति ग०।
(३) वाग्नेयमिति क० घ० च०।
(४) तथैन्द्रात्पौरुषं सूक्तमिति ख०।
(५) साध्येति ख०।
(६) सार्थं इति ख०।
(७) इत्येतामिति ख०।
(८) श्चत्रेति ख० ग०।

---

(क) ऋ० १०, ८६, १। (ख) ऋ० १०, ८६, ५। (ग) ऋ० १०, ८७, १।
(घ) ऋ० १०, ८८, १। (ङ) ऋ० १०, ८९, १०। (च) ऋ० १०, ९०, १।
(छ) ऋ० १०, ८९, ५।

साल्लोक्यात्साहचर्य्याद्वा स्तूयते सोम एव वा ॥१३७॥
निपातभाजं सोमञ्च अस्यां रथीतरोऽब्रवीत्।
ऐन्द्रो ह्येष निपातस्तु[१] स्तुतोऽग्निरुक्थेन[२]सः ॥१३८॥
यज्ञस्य वो[क] वैश्वदेवे प्रेत[ख] इत्युत्तरन्तु यत्।
तत्रार्बुदस्तु ग्रावाणं मूर्त्तिमन्तमिवार्चति ॥१३९॥
पुरूरवसि राजर्षावप्सरास्तूर्व्वशी पुरा।
न्यवसत् संविदङ्कृत्वा तस्मिन् धर्मञ्चचार च ॥१४०॥
तया तस्य च संवास[३]मसूयन् पाकशासनः।
पैतामहश्चानुरागमिन्द्रवच्चापि[४] तस्य तु ॥१४१॥
स तयोस्तु वियोगार्थं[५] पार्श्वस्थं वज्रमब्रवीत्।
प्रीतिम्भिन्ध्यनयो[६]र्वज्र मम चेदिच्छसि प्रियम् ॥१४२॥
तथेत्युक्त्वा तयोः प्रीतिं वज्रो भिदति[७] मायया।
ततस्तया विहीनस्तु चचारोन्मत्तवन्नृपः ॥१४३॥

---

(१) ऐन्द्रेषु हि निपातोऽत्रेति-क॰ ग॰ घ॰ च॰।
(२) वरुणेन सः इति ख॰।
(३) संवादमिति क॰ घ॰ च॰।
(४) चानुरागं त्विन्द्रवर्चा पीति क॰ ख॰ घ॰ च॰।
(५) विभागार्थमिति क॰ घ॰ च॰।
(६) प्रीतिम्भिद तयोरिति ग॰।
(७) भिनत्तीति साधु।

---

(क) ऋ॰ १०, ९२, १। (ख) ऋ॰ १०, ९४, १।

चरन् सरसि सोऽपश्यदभिरूपामिवोर्वशीम् ।
सखीभिरभिरूपाभिः पञ्चभिः पार्श्वतो वृताम्[१] ॥१४४॥
तामाह पुनरेहीति नेति सा त्वब्रवीन्नृपम् ।
तामुपाक्रथत प्रीत्या दुःखार्त्ता त्वब्रवीन्नृपम् ॥१४५॥
अप्राप्याहं त्वयाद्येह स्वर्गे प्राप्स्यसि मां पुनः ।
आक्रान्तं प्रति चाख्यान[२]मितरेतरयोरिदम् ॥१४६॥
संवादं मन्यते यास्क इतिहासन्तु शौनकः ।
हय[क] इति परमैन्द्रं प्रते[ख]या [ग]ओषधीस्तवः ॥१४७॥
आर्ष्टिषेणस्तु देवापिः कौरव्यश्चैव शन्तनुः[३] ।
भ्रातरौ[४] कुरुषु त्वेतौ राजपुत्रौ बभूवतुः ॥१४८॥
ज्येष्ठस्तयोस्तु देवापिः कनीयांश्चैव शन्तनुः ।
त्वग्दोषी राजपुत्रस्तु[५] ऋष्टिषेणसुतो[६]ऽभवत् ॥१४९॥

---

(१) वृता चलस्वभि स्वन इति ख० ।
(२) आख्यानमिति क० ग० घ० च० ।
(३) कनीयांश्चैव शन्तनुरिति ख० ।
(४) भारताविति क० ग० घ० च० ।
(५) त्वग्दोषिणौ राजपुत्त्र इति क० घ० च० ।
(६) आर्ष्टिषेणसुत इति ग० ।

---

(क) ऋ० १०, ९५, १ । (ख) ऋ० १०, ९६, १ । (ग) ऋ० १०, ९७, १ ।

सालोक्यात्साहचर्य्याद्वा स्तूयते सोम एव वा ॥१३७॥
निपातभाजं सोमञ्च अस्यां रथीतरोऽब्रवीत् ।
ऐन्द्रो ह्येष निपातस्तु(१) स्तुतोऽग्निररुणेन(२)सः ॥१३८॥
यज्ञस्य वो(क) वैश्वदेवे प्रैत(ख) इत्युत्तरन्तु यत् ।
तत्रार्बुदस्तु ग्रावाणं मूर्त्तिमन्तमिवार्चति ॥१३९॥
पुरूरवस्यि राजर्षावप्सरास्तूर्व्वशी पुरा ।
न्यवसत् संविदङ्कृत्वा तस्मिन् धर्म्मञ्चचार च ॥१४०॥
तया तस्य च संवास(३)मसूयन् पाकशासनः ।
पैतामहश्चानुरागमिन्द्रवर्चापि(४) तस्य तु ॥१४१॥
स तयोस्तु वियोगार्थं(५) पार्श्वस्थं वज्रमब्रवीत् ।
प्रीतिम्भिन्ध्यनयो(६)र्वज्र मम चेदिच्छसि प्रियम् ॥१४२॥
तथेत्युक्त्वा तयोः प्रीतिं वज्रो भिदति(७) मायया ।
ततस्तया विहीनस्तु चचारोन्मत्तवन्नृपः ॥१४३॥

---

(१) ऐन्द्रेषु हि निपातोऽन्वेति॰क॰ ग॰ घ॰ च॰ ।
(२) वरुणेन सः इति ख॰ ।
(३) संवादमिति क॰ घ॰ च॰ ।
(४) चानुरागं त्विन्द्रवर्चापीति क॰ ख॰ घ॰ च॰ ।
(५) विभागार्थमिति क॰ घ॰ च॰ ।
(६) प्रीतिम्भिद तयोरिति ग॰ ।
(७) भिनत्तीति साधु ।

---

(क) ऋ॰ १०, ९२, १ । (ख) ऋ॰ १०, ९४, १ ।

चरन् सरसि सोऽपश्यदभिरूपामिवोर्व्वशीम्।
सखीभिरभिरूपाभिः पञ्चभिः पार्श्वतो वृताम्[1] ॥१४४॥
तामाह पुनरेहीति नेति सा त्वब्रवीन्नृपम्।
तामुपाक्रयत प्रीत्या दुःखात्मा त्वब्रवीन्नृपम् ॥१४५॥
अप्राप्याहं त्वयाद्येह स्वर्गे प्राप्स्यसि मां पुनः।
आख्यानं प्रति चाख्यान[2]मितरेतरयोरिदम् ॥१४६॥
संवादं मन्यते यास्क इतिहासन्तु शौनकः।
वय[क] इति परमैन्द्रं प्रते[ख]या [ग]ओषधीस्तवः ॥१४७॥
आर्ष्टिषेणस्तु देवापिः कौरव्यश्चैव शन्तनुः[3]।
भ्रातरौ[4] कुरुषु त्वेतौ राजपुत्त्रौ बभूवतुः ॥१४८॥
ज्येष्ठस्तयोस्तु देवापिः कनीयांश्चैव शन्तनुः।
त्वग्दोषी राजपुत्त्रस्तु[5] ऋष्टिषेणसुतो[6]ऽभवत् ॥१४९॥

(१) वृता चतसृभिः सतः इति ख०।
(२) आख्यातमिति क० ग० घ० च०।
(३) कनीयांश्चैव शन्तनुरिति ख०।
(४) भारताविति क० ग० घ० च०।
(५) त्वग्दोषिणो राजपुत्त्रः इति क० घ० च०।
(६) आर्ष्टिषेणसुतः इति ग०।

(क) ऋ० १०, ९५, १। (ख) ऋ० १०, ९६, १। (ग) ऋ० १०, ९७, १।

राज्येन च्छन्दयामासुः[१] प्रजाः स्वर्गं गते गुरौ।
स मुहूर्त्तमिव ध्यात्वा प्रजास्ताः प्रत्यभाषत ॥ १५०॥

इति बृहद्देवतायां सप्तमोऽध्यायः।

---

(१) छन्दयेयुस्तम् राज्यमिति ख० ग० घ०।

## अथाष्टमोऽध्यायः ।

न राज्यमहमर्हामि नृपतिर्वोऽस्तु शन्तनुः ।
तथेत्युक्ताभ्यषिञ्चंस्ताः प्रजा राज्याय शन्तनुम् ॥१॥
ततोऽभिषिक्ते कौरव्ये वनन्देवापिराविशत् ।
न ववर्षाथ पर्जन्यस्तस्मिन्राष्ट्रे शतं समाः ॥२॥
ततोऽभ्यगच्छद्देवापिं प्रजाभिः सह शन्तनुः ।
प्रसादयामास चैनं तस्मिन् धर्मव्यतिक्रमे ॥३॥
शिशिक्ष(१) चैनं राज्येन(२) प्रजाभिः सहितस्तदा ।
तमुवाचाथ देवापिः प्रह्वं प्राञ्जलिसंस्थितम्(३) ॥४॥
न राज्यमहमर्हामि त्वग्दोषोपहतेन्द्रियः ।
याजयिष्यामि ते राजन् वृष्टिकामेष्ट्यया स्वयम् ॥५॥
ततस्तन्तु पुरोऽधत्त आर्त्विज्याय स शन्तनुः ।
स चास्य चक्रे कर्माणि(४) वार्षिकाणि यथाविधि ॥६॥

---

(१) सिषेचेति पाठः समीचीनः ।

(२) राज्ये त्विति पाठः साधीयान् । चैव राज्यस्येति क० ख० ग० ।

(३) प्रह्वस्तु प्राञ्जलि स्थितः इति क० ख० च०, प्रह्वन्तु प्राञ्जलिस्थित-मिति ग०, प्रह्वं प्राञ्जलिस्थितमिति पुस्तकान्तरम् ।

(४) चकार सोऽस्य कर्माणीति ख० ।

बृहस्पते प्रती(क)त्यग्निरीळे चैवं(१) बृहस्पतिम् ।
द्वितीययास्य सूक्तस्य बोधिते जातवेदसा ॥७॥
आस्ये ते द्युमतिं(२) वाचं दधामि स्तुहि देवताः(३) ।
इति(४) सोऽस्मै ददौ प्रीतो वाचं देवीं(५) तया च सः ॥८॥
अभिष्टुवन्स्तुभिर्देवान् जगौ वृष्ट्यर्थमेव तु ।
अग्निश्च सूक्तशेषेण क(ख)मैन्द्रं सूक्तमुत्तरम् ॥९॥
इन्द्रदूह्वे(ग)ति विश्वेषामु(घ)दित्युल्किकस्तुतिः परम् ।
शक्तिप्रकाशने तेषां(६) विनियोगोऽत्र कीर्त्यते ॥१०॥
प्रे(ङ)तीतिहासस्सूक्तन्तु(७) मन्यते शाकटायनः ।

(१) प्रतीत्येतदीळे चैवेति क० ग० च० ।
(२) अस्येति द्विमविरिति ख० ।
(३) द्वितीययास्य सूक्तस्येत्यादि दधामि स्तुहि देवताः इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु नापद्यत ।
(४) ततः इति क० ग० घ० च० ।
(५) वाचन्देवीमिति क० ग० घ० च० ।
(६) शक्तिप्रकाशने तेषामिति क० ख० ग० घ० च० ।
(७) इतिहासं प्रेति सूक्तमिति ख०, सेतिहासं प्रेति सूक्तमिति पुस्तकान्तरम् ।

(क) ऋ० १०, ९८, १ । (ख) ऋ० १०, ९९, १ । (ग) ऋ० १०, १००, १ । (घ) ऋ० १०, १०१, १ । (ङ) ऋ० १०, १०२, १ ।

यास्केन्द्रौ धन(१)मैन्द्रं वा वैश्वदेवन्तु शौनकः ॥११॥
आजावनेन(२) भार्म्यांश्च(३) इन्द्रासोमौ तु मुद्गलः ।
अजयद्वृषभं(४) युक्त्वा ऐन्द्रश्च द्रुघणं रथे ॥१२॥
युध्यन् संख्ये जयं प्रेप्सुरिन्द्रो(५) प्रतिरथं जगौ(६) ।
आशु(क)रैन्द्रमपादेवी अमीषा(ख)मित्यृचि स्तुता ॥१३॥
चतुर्थीं बार्हस्पत्या स्यादावल(ग) प्रसह्यामिति(७) ।
हुवे च(८) मरुतः प्रे(घ)ति शर्व्वेति परमन्तु यत् ॥१४॥
तथानिरुक्तसूक्तादावृगेका सूर्य्यमर्चति ।
घर्मपरा(९)श्वतसस्तु सवितारमभी(ङ)ति या ॥१५॥
सूक्तशेषस्य षडृचः सूर्य्याचन्द्रमसौ सह ।

---

(१) धनमिति ख०, धनमिति घ० च० ।
(२) आजावने त्विति ख०, आजीवनन्त्विति पुस्तकान्तरम् ।
(३) भार्म्म्याश्च इति ख० गार्ग्यश्चेति पुस्तकान्तरम् ।
(४) वृषभमिति क० ख० घ० ।
(५) इन्द्रः इति पाठः समूलः ।
(६) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते ।
(७) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते ।
(८) हुवत्त्विति ख०, हुवे त्विति ग० ।
(९) धर्म्मपरा इति ख० ग० ।

---

(क) ऋ० १०, १०३, १ । (ख) ऋ० १०,१०३,१२ । (ग) ऋ० १०,१०३,५ ।
(घ) ऋ० १०, १०३, १३ । (ङ) ऋ० १०, १०३, ७ ।

तुष्टावेन्द्रमसावी[क]ति अष्टकोऽस्मात् परेण[१] तु ॥१६॥
कौत्सः कदा वसोः [ख]सूक्तं दुर्मित्रो नाम नामतः ।
सुमित्र इति नामास्य[२] गुणार्थमितरं पदम् ॥१७॥
भर्तारस्तु प्रजाकामः कर्म्माणि कृतवान् पुरा ।
न हि लेभे प्रजाः काश्चित्काश्यपो मुनिसत्तमः ॥१८॥
उवाच भार्य्या भर्तारं सुतानिच्छामि यावतः ।
तावतो जनयिष्यामि देवता द्वन्द्वशस्तु हि ॥१९॥
तमभ्ययुस्तु सर्व्वाणि द्वन्द्वानि स्तुतिकाम्यया ।
तान्यवेक्ष्याथ तत्रर्के[३] नासत्यौ सूक्तभागिनौ ॥२०॥
तदेतदन्ततो भावादाश्विनं सूक्तमुच्यते ।
न ह्यस्मिन्देवतालिङ्गं प्रायेणात्र हि दृश्यते ॥२१॥
सूक्तेन तु परेणात्र स्वयमावि[ग]र्भूदिति ।
आत्मानमेव तुष्टाव प्राजापत्याय[४] दक्षिणा[घ] ॥२२॥
दाक्षनत्र सुतानेके दक्षिणानां वदन्ति तु ।
दाक्षलाद्दक्षिणानाञ्च भोजास्यतस्तृभिः स्तुताः ॥२३॥

---

(१) अष्टक· परमेष्ठेति क॰ ग॰ घ॰ ।
(२) सुमित्रश्चैव नाम स्यादिति क॰ ग॰ घ॰ ।
(३) सप्तके इति ख॰ ।
(४) अर्धेति ख॰ ।

---

(क) ऋ॰ १०, १०४, १ । (ख) ऋ॰ १०,१०५, १ । (ग) ऋ॰ १०,१०७,१ ।
(घ) ऋ॰ १०, १०७, ५ ।

असुराः पणयो नाम रसापारनिवासिनः[1]।
गास्तेऽपजह्रुरिन्द्रस्य न्यगूहंश्च[2] प्रयत्नतः ॥२४॥
बृहस्पतिस्तथापश्यद्दृष्ट्वेन्द्राय शशंस च।
प्राहिणोत्तत्र दूतीं तु[3] सरमां पाकशासनः ॥२५॥
किं[क]मित्यत्रागतामिस्तां पप्रच्छुः पणयोऽसुराः।
कुतः कस्यासि कल्याणि किं वा कार्य्यमिहास्ति ते ॥२६॥
अथाब्रवीत्तां सरमा दूत्यैन्द्री विचराम्यहम्।
युष्मान् व्रजायान्विष्यन्ती[4] ऐन्द्रीर्गाश्चैव पृच्छति ॥२७॥
विदित्वेन्द्रस्य दूतीन्तामसुराः पापचेतसः।
ऊचुर्मा सरमे गास्त्वमिहास्माकं स्वसा भव ॥२८॥
सुहृत्स्य चान्यथा चर्ष्या[5] युष्माभिस्त्वेव सर्वशः।
साब्रवीन्नाह[ख]मिच्छामि स्वसृत्वं वा धनानि वा ॥२९॥
पिबेयं[6] तु पयस्तासां गवां याश्च निगूहथ।
असुरास्तां तथेत्युक्त्वा तदाजह्रुः पयस्ततः ॥३०॥

---

(१) सिन्धुपारनिवासिनः इति ख०।
(२) निगूहस्येति क० घ० च०।
(३) दूत्येऽप्येति ख० ग०।
(४) विधूय व सर्व्वा इति क० घ० च०।
(५) सुहृत्स्यान्तपचर्य्येति क० घ० च०।
(६) पिबामीति क० घ० च०।

---

(क) ऋ० १०, १०८, १। (ख) ऋ० १०, १०८, १०।

सा स्वभावाच्च लौल्याच्च पीत्वा तत्[1] पय आसुरम् ।
वरं[2] संवननं हृद्यं बलपुष्टिकरं ततः ॥ २१ ॥
शतयोजनविस्तारामतरत्तां रसां पुनः ।
यस्याः पारेऽपरे तेषां पुरमासीच्च दुर्ज्जयम् ॥२२॥
पप्रच्छेन्द्रस्तु सरमां कच्चिद्गा दृष्टवत्यसि ।
सा नेति प्रत्युवाचेन्द्रं प्रभावादासुरस्य हि[3] ॥२३॥
तां जघान तदा क्रुद्ध उद्गिरन्ती पयस्ततः ।
जगाम सा भयोद्विग्ना पुनरेव पणीन् प्रति ॥२४॥
पयसस्तस्य पद्धत्या रथेन हरिवाहनः ।
गत्वा जघान च पणीन् गाश्च ताः पुनराहरत् ॥२५॥
तेऽवदन्[क] वैश्वदेवन्तु जामदग्न्यस्तथाप्रियः[4] ।

---

(१) चेति क॰ घ॰ च॰ ।
(२) पयः इति ग॰ ।
(३) त्विति क॰ ग॰ घ॰ च॰ ।
(४) ख॰ चिह्नितपुस्तके एतच्छ्लोकार्द्धं न विद्यते । तत्र चास्मिन् स्थले,
ते च तं वैश्वदेवं स्यात् मद्वाभाया भुजङ्गमौ ॥
यामदग्निसमिद्धाख्यौ प्रियस्तुतामतः परं ।
प्रजन्त युगपत् सर्व्वे वैरूपाक्षं त्रिभिः परैः ।
इति पाठो वर्त्तते ।

---

(क) ऋ॰ १०, १०८, १ ।

युगपद्वै भजन्तं तं[1] वैरूपा ह्युभयस्तयः ॥२६॥
इन्द्रं प्रति जगुः सूक्तैः पणीन् प्रतिजिगीषिणम्[2]।
वैश्वदेवं परं सूक्तं धर्म्मे[क]त्येकेन तु स्तुतान् ॥२७॥
देवानिन्द्रं च मन्यन्ते छन्दांस्यग्नि[3] च मध्यमम्।
आग्नेयं चित्र[ख] इत्येतज्जगादर्षिरुपस्तुतः ॥२८॥
पिबे[ग]न्द्रं स्तौति ने[घ]त्यत्रं रक्षोघ्नाग्नेयमुत्तरम्[4]।
इति वै[ङ] तावदैन्द्रं त[च]दाख्याः षष्ठ्यां निपातिताः[5] ॥३९॥
प्राजापत्यमथाग्नेयं वैन्यमित्यनुपूर्व्वशः।
वरुणेन्द्राग्निसोमाना[6] मिमं न[छ] इति संस्तुतिः[7] ॥४०॥
चतस्रस्त्वत्र सूक्तादावग्निरात्मस्तवं जगौ।
स्तुतः सोमस्तु षष्ठ्या च नवम्या[8]श्च पदैस्त्रिभिः ॥४१॥

---

(१) व्रतं तन्विति क॰ घ॰ घ॰।
(२) प्रतिमनीषिणः इति ख॰।
(३) छन्दांस्यग्निमिति ख॰।
(४) आग्नेयन्तु परं ततः इति क॰ घ॰ च॰।
(५) षष्ठ्यास्व संस्तुतः इति ख॰।
(६) सोमाग्निवरुणानान्त्विति क॰ घ॰ घ॰।
(७) संस्तवः इति ख॰ ग॰।
(८) नवम्यामिति ख॰, नवम्येति ग॰।

---

(क) ऋ॰ १०, ११४, १। (ख) ऋ॰ १०, ११५, १। (ग) ऋ॰ १०, ११६, १। (घ) ऋ॰ १०, ११७, १। (ङ) ऋ॰ १०, ११९, १। (च) ऋ॰ १०, १२०, १। (छ) ऋ॰ १०, १२४, १।

वारुण्यस्तितरास्तिस्र[1] इन्द्र[क]मेवोत्तमं पदम्[2] ।
अहं[ख] वाक्सूक्तमर्य्यम्णो मित्रस्य वरुणस्य च ॥४२॥
न तं[ग] रात्र्याः परं सूक्तं वैश्वदेवं ममे[घ]ति यत् ।
नमस्ते वैद्युतं सूक्तं त्वाशीर्वादः परन्तु तत्[3] ॥४३॥
याङ्कल्पयन्ति नोऽरयः कृत्या[4] नाशनमात्मनः[5] ।
हिरण्यस्तुतिरायुष्यं नाम[ङ]स्य[6]त्परमेष्ठिनः ॥४४॥
वदन्ति भाववृत्तं तस्मो यज्ञ[च] इति चोत्तरम्[7] ।
अपे[छ]न्द्रमत्र त्वाश्विन्यौ चतुर्थी पञ्चमी स्तुते[8] ॥४५॥
मैत्रावरुणमोजान्तं[ज] प्रथमायामृचि स्तुता[9] ।
अर्धर्चे द्यौश्च भूमि[10]श्च आश्विना चोत्तरे ततः[11] ॥४६॥

(१) स्तत्रेति ग॰ ।
(२) उत्तमो जगाविति ग॰ ।
(३) यदिति ख॰ ।
(४) कृत्यामिति ग॰ ।
(५) नतिं कृत्वा दैवतमुच्यते इति ख॰ ।
(६) नेति यदिति क॰ घ॰ च॰ ।
(७) उत्तरन्तस्य चैव वदिति क॰ घ॰ च॰ ।
(८) च येति ख॰ ।
(९) स्तुताः इति ख॰ ग॰ ।
(१०) पूषेति ख॰ ।
(११) चाश्विनौ चोत्तरे ततः इति क॰ ग॰ घ॰ च॰, उत्तरेष्विति ख॰।

(क) ऋ॰ १०, १२४, ८ । (ख) ऋ॰ १०, १२५, १ । (ग) ऋ॰ १०, १२७, १ । (घ) ऋ॰ १०, १२८, १ । (ङ) ऋ॰ १०, १२९, १ । (च) ऋ॰ १०, १३०, १ । (छ) ऋ॰ १०, १३१, २ । (ज) ऋ॰ १०, १३२, १ ।

मोक्षे(क)न्द्रं वैश्वदेव्यृक् तु नकिर्देवा मिनीमसि(ख) ।
यस्मिन् तृच (ग)इति तस्मिन् द्युस्थाने स्तूयते यमः ॥४७॥
केश्यग्निं (घ)केशिनः सूक्तं द्युत देवाः (ङ)परन्तु यत् ।
देवानामत्र वाद्या स्यादायव्यस्तृच उत्तरः[१] ॥४८॥
वायन्तां (च)वैश्वदेव्यृक् तु प्रैषस्त्वद्देवतः परः[२] ।
स्याद्वे त[३]द्विश्वभैषज्यं रपसो वा विनाशनम्[४] ॥४९॥
भूमिर्लोका परं सूक्तं तवै(छ)न्द्रं सूक्तमुत्तरम् ।
सूर्य्यरश्मि(ज)रिति तस्मिन् सावित्रः प्रथमस्तृचः ॥५०॥
आत्मा स्तुतः परोक्ष[५]स्तु गन्धर्वेणोत्तरे तृचे ।
इन्द्रो वैव[६]निपातेन अथ वा सूर्य्य उच्यते ॥५१॥
सूक्तेऽस्मिन् देवतास्तिस्र एता एव प्रकीर्त्तिताः ।
आग्नेयं त्वग्ने(झ) तवे तु अग्ने अच्छे(ञ)ति यत्परम्[७] ॥५२॥

---

(१) ऋगाद्या तत्र देवानां वाते देवस्तृचः परः इति ख० ।
(२) स्मृता ख० ।
(३) स्यादेतदिति ग० ।
(४) रपसस्यापनोदनमिति ख० ।
(५) परोक्षमिति ख० ।
(६) चैवेति ख० ।
(७) एष श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते ।

---

(क) ऋ० १०, १३३, १ । (ख) ऋ० १०,१३४,७ । (ग) ऋ० १०,१३५,१ ।
(घ) ऋ० १०,१३६,१ । (ङ) ऋ० १०, १३७,१ । (च) ऋ० १०,१३७,५ ।
(छ) ऋ० १०, १३८, १ । (ज) ऋ० १०, १३९,१ । (झ) ऋ० १०,१४०,१ ।
(ञ) ऋ० १०,१४१,१ ।

आग्नेयं वैश्वदेवञ्च अय[क]मित्यच तु द्वचाः[1]।
शार्ङ्गाश्चत्वार ऋषयो अग्निमार्चन् पृथक् पृथक् ॥५३॥
आश्विनं त्वश्वि[ख]दित्येतदय[ग]मैन्द्रं ततः परम्।
इमां खनामी[घ]ति सूक्तमिन्द्राणी यत्स्वयं जगौ ॥५४॥
तदौपनिषदं सूक्तं भाववृत्तं प्रचक्षते।
[2]अरण्यानी[ङ]त्यरण्यान्याः स्तुतिरैन्द्रे तदुत्तरे ॥५५॥
सावित्रं सविता यन्त्रैः[च] समिद्धश्चित् समिध्यसे[छ]।
आग्नेयं श्रद्धया[ज] श्राद्धं मेधासूक्तमतः परम् ॥५६॥
आग्नेयमासुरित्यस्माच्छास[झ] ऐन्द्रे ततः परे।
सोम एकेभ्य[ञ] इत्येतद्भाववृत्तं प्रचक्षते[3] ॥५७॥

---

(१) द्वृचाः इति ग०।
(२) ख० चिह्नितपुस्तके अरण्यानीति श्लोकात् प्राक्, उत्तरानपर्णां पाठान्तु स्तौति सूक्ते मन्त्रौषधिम्। पतिसंवननीं त्वं पाप्मनः सपत्नापनोदिकाम्। इत्यधिकं पठितम्।
(३) वदन्ति लिति ख०।

---

(क) ऋ० १०, १४२, १। (ख) ऋ० १०, १४३,१। (ग) ऋ० १०,१४४,१। (घ) ऋ० १०, १४५, १। (ङ) ऋ० १०,१४६ १। (च) ऋ० १०,१४९,१। (छ) ऋ० १०, १५०, १। (ज) ऋ० १०,१५१,१। (झ) ऋ० १०,१५२,१। (ञ) ऋ० १०, १५४, १।

शौनको वैश्वदेवन्तु मन्यते शाकटायनः।
सूक्तेऽस्मिन् देवतास्तिस्र एता एव प्रकीर्त्तिताः[1] ॥५८॥
यदद्राग्री[क]त्यसम्मीप्तं तच चत्तौ[ख] इति हृचे।
प्राधान्याद्वा निपाताद्वा स्तूयते ब्रह्मणस्पतिः ॥५९॥
इन्द्रस्यैव य[ग]दित्यस्यां विश्वेदेवाः परौ[घ] तृचि।
आग्नेयं चाग्नि[2][ङ]मित्येतद्वैश्वदेवमिमा नु कम्[च] ॥६०॥
इन्द्रः प्राधान्यतस्त्वत्र[3] विश्वैर्देवैः सह स्तुतः।
आदित्यैश्च मरुद्भिश्च तथारूपं हि दृश्यते ॥६१॥
सूर्य्यो न[छ] इति सौर्य्यन्तु यत्त्वेतदुदसा[ज]विति।
पौलोमी स्वान् गुणांस्तत्र सपत्नीनां प्रशंसति ॥६२॥
ऐन्द्रं[4] तीव्रस्य[झ] मुञ्चामि[ञ] भेषज्यं यक्ष्मनाशनम्।
राजयक्ष्मघ्नं सूक्तं प्राजापत्यं तदुच्यते ॥६३॥
ऐन्द्राग्नं मन्यते यास्क एके लिङ्गोक्तदैवतम्।

---

(१) शौनको वैश्वदेवन्त्वित्यादि एता एव प्रकीर्त्तिता इत्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नेष्यते।

(२) त्वाग्निमिति घ॰।

(३) प्रधानतो वात्रेति ख॰।

(४) इन्द्रमिति ख॰।

---

(क) ऋ॰ १०, १५५, १। (ख) ऋ॰ १०,१५५,२। (ग) ऋ॰ १०,१५५,४।
(घ) ऋ॰ १०, १५५, ५। (ङ) ऋ॰ १०,१५६,१। (च) ऋ॰ १०,१५७,१।
(छ) ऋ॰ १, १५८, १। (ज) ऋ॰ १०,१५९, १। (झ) ऋ॰ १०, १६०, १।
(ञ) ऋ॰ १०, १६१, १।

गर्भसंस्रवसंयुक्तं[१] यस्तेतद्ब्रह्मणे[क]ति तु ॥६४॥
स्रवतामपि गर्भाणां दृष्टन्तदनुमन्त्रणम्।
वैन्यन्तु वेनस्तत्पश्य[२] दचीभ्यां[ख] यक्ष्मनाशनम् ॥६५॥
दुःस्वप्नघ्नमपेही[ग]ति निपातीन्द्रोऽग्निरेव तु।
आसीदृषि[३]र्दीर्घतपाः[४] कपोतो नाम नैर्ऋतः ॥६६॥
चक्रे[५]कपोतस्तस्याश्रामग्निधाने पदङ्कित।
स त[६]मात्मश्रितैर्वाक्यैः कपोतं स्तुतवानृषिः[७] ॥६७॥
देवा [घ]इति तु सूक्तेन प्रायश्चित्तार्थमुच्यते।
ऋषभं मा[ङ] सपत्नघ्नं येनेदमिति मानवम् ॥६८॥
तुभ्ये[च]त्यृषी ददृशतुरैन्द्रं गाथिनभार्गवौ।
वरुणो विधातानुमतिर्धाता सोमो बृहस्पतिः ॥६९॥
षडेता देवतास्तत्र तृतीयायामृचि स्तुताः।
वातस्ये[छ]ति परेणास्तौदनिलं पितरं स्वकम् ॥७०॥

---

(१) रक्षोघ्नाग्नेयमित्युक्तमिति ख॰ ग॰।
(२) अपश्यदित्यर्थे पश्यदित्यार्षः। भावक्तं पश्येवमिति ख॰।
(३) आशीविषः इति ख॰।
(४) दीप्ततपाः इति क॰ घ॰ च॰।
(५) अकरोदिति क॰ घ॰ च॰।
(६) शतमिति ख॰, सुतमिति ग॰।
(७) कपोतो नैर्ऋतस्तदेति क॰ ग॰ घ॰ च॰।

---

(क) ऋ॰ १०, १६२, १। (ख) ऋ॰ १०,१६३,१। (ग) ऋ॰ १०,१६४,१।
(घ) ऋ॰ १०, १६५, १। (ङ) ऋ॰ १०,१६६, १। (च) ऋ॰ १०,१६७,१।
(छ) ऋ॰ १०, १६८, १।

मयो भू(क)रिति यत्सूक्तमपश्यच्छबर(१) ऋषिः ।
नानारूपाः पयस्विन्यो गावस्तत्र तु संस्तुताः ॥७१॥
विभ्राट्(ख) सौर्यन्त्वनु(ग)मैन्द्रन्त्वायाही(घ)त्युषसः स्तुतिः ।
आ त्वा(ङ)राज्ञेऽभिषिक्ताय(२)द्वे सूक्ते चानुमन्त्रणे ॥७२॥
प्र व (च)इत्युत्तरं ग्रावणं ददर्श स्तुतिमार्बुदिः(३) ।
यत्ततः(४) परमाग्नेयं तत्राभर्व्युक् प्रसूनवः(छ) ॥७३॥
ऋषिर्जगौ पतङ्गस्तु पतङ्ग(ज)मिति यत्परम् ।
तत्सौर्यमेके मन्यन्ते मायाभेदं तथापरे ॥७४॥
मायाभेदे द्वितीयायां वाक् सूतेत्याह शौनकः ।
देवी विभ्रमति मनसापा वाचा विदितां सती(५) ॥७५॥
त्यमूस्वि(झ)ति तु सौपर्ण(६) सूक्तं स्वस्त्ययनं विदुः ।
उ(ञ)दैन्द्रं वैश्वदेवन्तु मथस्वे(ट)ति च यत्परम् ॥७६॥

---

(१) शबरः इति क० घ० च० ।
(२) अभिषिक्तस्येति ख० ।
(३) आर्बुदः इति ख० ।
(४) यतत इति क० घ० च० ।
(५) मायाभेदे द्वितीयायामित्यादि या वाचा विदितां सतीत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।
(६) तार्क्ष्यदैवत्यमिति ख० ।

---

(क) ऋ० १०, १६९, १। (ख) ऋ० १०,१७०,१ । (ग) ऋ० १०, १७१,१ ।
(घ) ऋ० १०, १७२, १ । (ङ) ऋ० १०,१७३, १ । (च) ऋ० १०,१७५,१ ।
(छ) ऋ० १०, १७६, १ । (ज) ऋ० १०,१७७,१ । (झ) ऋ० १०,१७८,१ ।
(ञ) ऋ० १०, १७९, १ । (ट) । ऋ० १०, १८१, १ ।

आत्मप्रभावमाचख्युस्तत्राद्या ऋषयस्त्रयः ।
रथन्तरं यथा स्तोत्रं स्तोत्रञ्चैव यथा बृहत् ॥७७॥
यथा च सम्भृतो घर्म्मः सवितुश्चोपलच्यते[१] ।
बृहस्पति[क]रिति तस्मिन् स्तुतः सूक्ते बृहस्पतिः ॥७८॥
आशिषो यजमानस्य केचिदेतां स्तुतिं विदुः[२] ।
प्राजापत्यस्य यत् सूक्तमपश्यं त्वा[ख]प्रजावतः ॥७९॥
प्रत्यृचं देवता स्तौति लिङ्गैरेवात्र देवताः[३] ।
आशिषः पुत्रकामस्य प्रथमा ह्नि वदत्यथ ॥८०॥
द्वितीया पुत्रकामायास्तृतीयात्मस्तव[४]स्तृपेः ।
यद्विष्णु[ग]रिति सूक्तन्तु वैश्वदेवं प्रचक्षते ॥८१॥
तस्मिन् स्वदारगर्भार्थमुपिराशास्त आशिषः ।

---

(१) वादश्चैवात्र दृश्यते इति क॰ घ॰ च॰ ।

(२) बृहस्पतिरिति तस्मिन्नित्यादि केचिदेतां स्तुतिं विदुरित्यन्तपाठः ख॰ चिह्नितपुस्तके न विद्यते। तत्र अस्मिन् स्थले, सूक्ते॰ ऽस्मिन् देवतास्तिस्र एता एव प्रकीर्त्तिताः इति श्लोकार्द्धं वर्त्तते ।

(३) एवार्थलक्षिताः इति ख॰, एष श्लोकः क॰ घ॰ च॰ चिह्नितपुस्तकेषु नोपलभ्यते ।

(४) आत्मस्तवमिति ग॰ ।

---

(क) ऋ॰ १०,१८२, १। (ख) ऋ॰ १०,१८३, १। (ग) ऋ॰१०,१८४, १।

परन्तु[१] नेजमेषं हि[२] गर्भार्थं ताव[३]दुच्यते ॥८२॥
माहिने यदहि त्रीण[क]मादित्यानां स्तुतिं विदुः[४]।
सूर्यवरुणमित्राणामादित्येष्वितरेषु तु[५] ॥८३॥
एत[६] एव त्रयो वाता स्तुताः स्वल्पेष्व[७]तोऽन्यथा।
शान्त्यर्थं सूक्तमेतद्धि पावनं चैव विश्रुतम् ॥८४॥
पातमपि स्वस्त्ययने दृष्टं तदनुमन्त्रणम्[८]।
उलोऽस्तौत्पितरं वातमाग्नेयं प्राग्नये[ख] परम् ॥८५॥
विसृष्टं जातवेदस्यं प्रे[ग]ति दाशतयीषु[९] तु।
यत्किञ्चिदेव त्वा[१०]ग्नेयं जातवेदस्यमुच्यते ॥८६॥
आयङ्गौ[घ]रिति यत्सूक्तं सार्पराज्ञी[११]स्वयं जगौ।

(१) परे त्विति ख०।
(२) नेजमेषेति ख० ग०।
(३) वा तदि क० घ० च०।
(४) आदित्येष्वितरेषु त्विति क० घ० च०।
(५) एतच्छ्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु नेक्ष्यते।
(६) एता इति क० घ० च०।
(७) स्वल्पेष्विति ख०।
(८) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते।
(९) दाशतयीष्विति ख०।
(१०) अन्यच्चेति ख० ग०।
(११) सर्पराज्ञीति क० घ० ङ०।

(क) ऋ० १०, १८५, १। (ख) ऋ० १०, १८७, १। (ग) ऋ० १०, १८८, १।
(घ) ऋ० १०, १८९, १।

तस्मात् सा देवता[१] तच सूर्य्यमेके प्रचक्षते ॥८७॥
मुद्गलः शाकपूणिश्च आचार्य्यश्च रथीतरः[२] ।
चिस्थानाधिष्ठितां वाचं मन्यन्ते प्रत्यृचं स्तुताम् ॥८८॥
भावद्वृत्तपरं[३] सूक्तं ददर्शाथाघमर्षणः ।
परं न विद्यते तस्माच्छान्त्यै वा पावनाय वा ॥८९॥
यथाश्वमेधः क्रतुराट् सर्व्वरिप्रप्रणोदनः[४] ।
तथाघमर्षणं ब्रह्म सर्व्वरिप्रप्रणोदनं[५] ॥९०॥
तदादीनि[६] तु यच्चातः संज्ञानं ज्ञानसंस्तवः ।
चतुर्थं यत्तु नैर्ऋत्यं तत्सपत्ननिवर्हणम्[७] ॥९१॥
संसमित्[क] प्राध्वराणाङ्गेत्याग्नेये एव ते स्मृते[८] ।

(१) तस्य स्याद्देवतेति क॰ ख॰ घ॰ च॰ ।
(२) आचार्य्यः शाकटायनः इति ख॰ ग॰ ।
(३) भावद्वृत्तमृतमिति क॰ घ॰ च॰ ।
(४) सर्व्वरीप्रप्रणोदनः इति ख॰ ।
(५) यथाश्वमेधः क्रतुराट् इत्यादि सर्व्वरिप्रप्रणोदनमित्यन्तपाठः क॰ घ॰ च॰ चिह्नितपुस्तकेषु नापलभ्यते ।
(६) त्यदादीनीति क॰ घ॰ च॰ ।
(७) चतुर्थस्तैर्ऋत्य यत्तत्सपत्नीनिवर्हणमिति क॰ घ॰ च॰ ।
(८) उभे तत्राग्निदेवते इति क॰ घ॰ च॰ ।

(क) ऋ॰ १०, १९१, १ ।

उशना वरुणश्चेन्द्रश्चाग्निश्च सविता स्तुताः ॥९२॥
संज्ञानं प्रथमस्या(१)न्तु द्वितीयस्यामथाश्विनौ(२)।
तृतीया चोत्तमे च द्वे आशिषोऽभिवदन्ति ताः(३) ॥९३॥
इन्द्रः पूषा सपत्नघ्ने द्वितीयस्यामृचि स्तुतौ।
देवानामितराः प्रोक्ता आशीर्वादपराश्च याः(४) ॥९४॥
(५)महानाम्न्य ऋचो गुह्यास्ता ऐन्द्र्यश्चैव यो वदेत्।
सहस्रयुगपर्य्यन्तं सोऽहं ब्रह्म स राध्यते(६) ॥९५॥
(७)पुरीषपदमासान्तु प्रथमं स्यात्प्रजापतेः(८)।

---

(१) प्रथमायामिति पाठः शुद्धः।

(२) उशना वरुणश्चेन्द्रइत्यादि द्वितीयस्यामथाश्विनावित्यन्तपाठः क॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते।

(३) स त्वाशीर्व्वाद उच्यते इति क॰ घ॰ च॰।

(४) एष श्लोकः क॰ घ॰ च॰ चिह्नितपुस्तकेषु नेष्यते।

(५) ख॰ चिह्नितपुस्तके महानाम्न इति श्लोकात्प्राक्, संसंसंज्ञानमित्येते श्वेवनन्तं विदुरिति श्लोकार्द्धं वर्त्तते।

(६) राध्यतीति पाठः साधुः, सोऽहं ब्राह्मः सराध्यते इति क॰ घ॰ च॰, साह ब्राह्मं खरं ध्यास्ते इति ख॰।

(७) समिद्देवतमिति ख॰।

(८) ख॰ चिह्नितपुस्तके पुरीषपदमासान्त्विति श्लोकात् प्राक्,—

त्रिधाधर्मियामिकाः सूक्तानाम-
स्मिन् धृतो दृश्यते यः सूक्तभावा।
प्रधानसूक्तं किल देवतायाः
सूक्तभाजः सर्व्वदा शौनकेन।

आग्नेयमैन्द्रं वैष्णवं पौष्णं दैवन्तु पञ्चमम्[१] ॥८६॥
अग्नेः प्रयाजानुयाजा प्रैषा ये च[२] हवींषि च।
यद्दैवत हविस्तु स्यादाग्नेयास्तद्दैवतास्तु[३] ते ॥८७॥
निविदा निगदानाञ्च स्वैः स्वैर्लिङ्गैश्च देवता[४]।
निगदेन[५] निगद्यन्ते याश्च कल्पानुगा ऋच ॥८८॥
अग्नेरेव तु गायत्री उष्णिक्[६] सवितु' स्मृता।
अनुष्टुभस्तु सोमस्य बृहत्यस्तु बृहस्पतेः ॥८९॥

ऐन्द्रा ऋचो महानाम्नीस्तु विद्या
तथा हि दृष्ट ब्राह्मणसूक्तशब्द।
न दृश्यते सूक्तशब्दो न विद्युं
यथा प्रैषेष्वाहासूक्ताभिधानम् ॥

सूक्तैकदेशा इति तान् प्रतीया-
दन्याश्च कुन्या पदशो निशम्या।
यथैतशो देवि निषादि सञ्ज्ञा
कुन्तापे तत्सर्वमेकं सूक्तम् ॥

इत्यधिकपाठोऽस्ति।

(१) विन्द्र त्वा वैष्णवञ्चैव पौष्णञ्चैव मन परमिति ख०।
(२) एवेति क० घ० च०।
(३) चेति ख०।
(४) लिङ्गोक्तदेवता इति क० घ० च०।
(५) निगदैश्चेति ख०।
(६) उष्णिक इति ख०, उष्णिहेति ग०।

पङ्क्त्यस्त्रिष्टुभश्चैव विद्यादैन्द्रयश्च सर्व्वशः।
विश्वेषां चैव देवानां जगत्यो यास्तु काश्चन ॥१००॥
विराजश्चैव मित्रस्य स्वराजो वरुणस्य च।
विषये यस्य वा स्यातां स्यातां वा वायुदेवते ॥१०१॥
इन्द्रश्चातिधृतिः प्रोक्ता वायोश्च भुरिजः स्मृताः[1]।
यास्त्वतिच्छन्दसः काश्चित्ताः प्रजापतिदेवताः[2] ॥१०२॥
विच्छन्दसस्तु वायव्या मन्त्राः पादैश्च ये मिताः।
पौरुषा द्विपदाः सर्व्वा ब्राह्म्य एकपदाः स्मृताः[3] ॥१०३॥
समस्ता श्चच आग्नेय्यो वायव्यानि यजूंषि च।
सौर्य्याणि चैव सामानि सर्व्वाणि ब्राह्मणानि च ॥१०४॥
वैश्वदेवो वषट्कारो हिङ्कारो ये यजामहे।
रूपं वज्रस्य वाक्पूर्व्वं स्वाहाकारोऽग्निदैवतः ॥१०५॥
देवानाञ्च पितॄणाञ्च नमस्कारः स्वधेव[4] च।
क्रुष्टो मूर्द्धनि विज्ञेयस्तालव्यः प्रथमः स्वरः ॥१०६॥
द्वितीयस्तु भ्रुवोर्मध्ये तृतीयः कर्णमंश्रितः।
चतुर्थो नासिकाग्रे स्यादौरसो मन्द्र उच्यते ॥१०७॥

---

(१) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ चिह्नितपुस्तकेषु न पठितम्।
(२) एतच्छ्लोकार्द्धं ख॰ चिह्नितपुस्तके न दृश्यते।
(३) द्विपदा पौरुषं छन्दो ब्राह्मो त्वेकपदा स्मृता इति ख॰।
(४) स्वधेति ख॰।

मन्द्रकर्षणसंयुक्तमतिस्वारं प्रशंसति[1]।
वदन्ति देवताः क्रुष्टं मनुष्यास्त्वितरैस्त्रिभिः[2] ॥१०८॥
द्वितीयं वसवः[3] सर्व्वे गन्धर्वाप्सरसः स्वरम्।
अण्डजाः पक्षिणः सर्पाश्चतुर्थमुपभुञ्जते[4] ॥१०९॥
मन्द्राः पिशाचा रक्षांसि असुराश्चोपभुञ्जते[5]।
अतिस्वार[6]स्तु शेषस्य जङ्गमस्थावरस्य च ॥११०॥
वैश्वदेवस्वरः क्रुष्टो नित्यं यो मूर्ध्नि तिष्ठति[7]।
तालव्यः प्रथमः साध्यां स्वरं आदित्यदेवतः[8] ॥१११॥
स्वरो द्वितीयः साध्यानां भ्रुवोर्देशश्रितश्च यः[9]।
आश्विनस्तु[10] तृतीयोऽच स्वरः कर्णसमाश्रितः ॥११२॥
चतुर्थस्त्वत्र[11] वायव्यो नासिक्यः स्वर उच्यते।

---

(१) तु तं विदुरिति ख०।
(२) सर्व्वा मनुष्याः प्रथमं स्वरमिति ख०।
(३) पशवः इति ख० ग०।
(४) तूपभुज्यते इति क० घ० च०, चतुर्थञ्चोपभुञ्जते इति ख०।
(५) एतश्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते।
(६) अतिस्वार्य्यः इति क० घ० च०, अतिसार इति ख०।
(७) ख० चिह्नितपुस्तके, वदन्ति देवताः क्रुष्टमित्यादि नित्यं यो मूर्ध्नि तिष्ठतीत्यन्तं, द्वितीयस्तु भ्रुवोर्मध्ये इति श्लोकात् प्राक् पठितं।
(८) चेदन्त्य एव त्विति क० घ० च०।
(९) देशं समाश्रितः इति ख० ग०।
(१०) आग्नेयस्त्विति क० घ० च०।
(११) त्रिषु इति क० घ० च०।

पञ्चमस्तु स्वरः प्रोक्तश्चाक्षुषः सूर्य्यदैवतः[1] ॥११३॥
यस्तु सामस्वरः षष्ठः[2] स सौम्यो मन्द्र उच्यते।
विकर्षेण तु मन्द्रस्य[3] युक्तोऽतिस्वार्य्य उच्यते ॥११४॥
स मैत्रावरुणो ज्ञेयो मन्द्रस्थानसमाश्रितः[4] ॥
सामस्वराणां सप्तानामेते देवा इहोदिताः[5] ॥११५॥
त्रयाणामितरेषां तु लोकाधिपतयस्त्रयः।
वाग्दैवत्योऽथ वाग्नेयः प्रस्तावश्चैव सामसु ॥११६॥
उद्गीथापद्रवावैन्द्रौ स्यातां वा वायुदैवते।
सौर्य्यः स्यात्प्रतिहारोऽत्र निधनं वैश्वदेवतम् ॥११७॥
हिङ्कारप्रणवाभ्यान्तु पुरस्तादेव कीर्त्तनात्।
इति व्यस्तसमस्तानां मन्त्राणामिह दैवतम्।
देवताविद्वेदेन प्रयोगे सर्व्वकर्म्मणाम् ॥११८॥
सप्तर्षयो वसवश्चापि देवा
अथर्व्वाणो भृगवः सोमसूर्य्याः[6]।

---

(१) एतदर्द्धश्लोकार्द्धं क॰ ख॰ ग॰ चिह्नितपुस्तकेषु नापलभ्यते।
(२) षष्ठ इति क॰ ग॰ घ॰।
(३) कर्षणेनैव मन्द्रस्येति क॰ ख॰ घ॰, विकर्षेण तु मन्द्रस्येति ग॰।
(४) मन्द्रस्थानसमाश्रितः इति क॰ ख॰ घ॰, मन्द्रस्थानसमाश्रि प-श्चिति ग॰।
(५) इति स्वराणां सप्तानामुक्ताः सामसु देवताः इति क॰ ख॰ घ॰।
(६) चन्द्रोऽर्य्यमा इति क॰ ख॰ घ॰।

पथ्यास्वस्ती रोदसी चोक्तमन्त्रे-
कुहूर्गुङ्गुरदितिर्धेनुरध्या ॥११९॥
असुनीतिरिला वा धीः[1] विधातानुमतिर्दया ।
अङ्गिरोभिः सहैताः सुक्तमन्त्राश्च देवताः ॥१२०॥
वैश्वानरो हि[2] सुपर्णो विवस्वान्
प्रजापतिर्गौः सुधन्वा नगोधः[3]।
अपां नपादर्य्यमा वातजूति-
रिलस्पतिर्थैव रयस्पतिश्च॥१२१॥
ऋभवः पर्ज्जन्यः पर्व्वताश्चाश्च[4] पत्नी-
र्द्यौ भगो[5] देवपत्नीर्दिशश्च।
आदित्या रुद्राः पितरोऽथ साध्या
निपातिनो वैश्वदेवेषु सर्व्वे॥१२२॥
अनुक्रान्ता देवताः सूक्तभाजो
हविर्भाजश्चोभयथा निपातैः।
अथेवं स्यादुभयथान्यथा वा
न प्रत्यक्षमनृषेरस्ति मन्त्रः ॥१२३॥

---

(१) स्यादिति ख॰ ग॰।

(२) द्यौ सुधन्वा गोभ्य इति क॰ घ॰ च॰, न नद्य इति ग॰।

(३) च्यवीति ख॰ ग॰।

(४) वा गावश्चेति क॰ घ॰ च॰।

(५) भर्गः इति ग॰।

